# ऊर्मिलीय-

# महाकाव्यम्

शिक्षा तथा समाज कल्याण मंत्रालय भारत सरकार की
आर्थिक सहायता से प्रकाशित

श्री पं० नारायण शुक्ल:

# ऊर्मिलीयमहाकाव्यम्



कवयिता

श्री पं० नारायणशुक्लः

शिक्षा तथा समाजकल्याण मंत्रालय

भारत सरकार से प्राप्त

आर्थिक सहायता से

प्रकाशित

# ऊर्मिलीयमहाकाव्यम्

कवयिता

श्री पं० नारायण शुक्लः



प्रकाशकः

श्री पं० नारायण शुक्ल
प्रधानाचार्यः
श्री नाथ संस्कृत महाविद्यालय
हाटा, देवरिया, उ० प्र०



प्रकाशनवर्ष १९७३

प्रथमावृत्तिः १०००

मुद्रकः

सुधीरकुमार चतुर्वेदी
सुदर्शन मुद्रक,
६३ । ४२, छोटी पियरी, काशी

# प्रस्तावना

आजसे लगभग पचास वर्ष पूर्व बंगालके प्रसिद्ध लेखक श्री दिनेशचन्द्र सेनके प्रसिद्ध ग्रन्थ रामायणी कथाकी भूमिकामें विश्व कवि रवीन्द्रनाथ ठाकुरने लिखा था कि रामायणनें लक्ष्मणकी पत्नी उर्मिलाकी, कादम्बरीमें पत्रलेखाकी और अभिज्ञान शाकुन्तलमें अनसूया-प्रियंवदाकी उपेक्षाकी है। बाल्मीकि, बाण और कालिदासने अपने इन प्रमुख पात्रोंको अर्ध चित्रित छोड़ दिया। इसी आधारपर पंडित महावीर प्रसाद द्विवेदीकी प्रेरणासे हिन्दीके प्रसिद्ध कवि मैथिलीशरण गुप्तने 'साकेत' महाकाव्य लिखा जिसमें प्रधान नायिकाके रूपमें सीताके बदले उर्मिलाको प्रतिष्ठित किया गया है।

श्री पंडित नारायण शुक्लने भी वही आधार लेकर संस्कृति महाकाव्यके समस्त लक्षणोंसे सुमंडित करके ऊर्मिलीय महाकाव्यकी रचनाकी है जिसमें रामके यौवराज्याभिषेककी तैयारी, वनवास, रामराज्य सीता-वनवास, लवकुशका जन्म, रामद्वारा अश्वमेध यज्ञकी तैयारी, लवकुश द्वारा अश्वमेधके घोड़ेका बन्धन, लक्ष्मणके पुत्रसे उनका युद्ध, परस्पर परिचय, राम द्वारा सीताका पुनर्ग्रहण, लक्ष्मणके पुत्रोंकी विभिन्न

राज्योंके संचालनके लिये नियुक्ति तककी कथा अत्यन्त काव्यात्मक कौशलके साथ लिखी गई है और इसमें कोई सन्देह नहीं कि पंडित नारायण शुक्लजीने इसमें रामायण और पुराणकी कथाओंका आश्रय लेनेके साथ-साथ अपनी उर्वरा कल्पनाका अधिक आश्रय लिया है। वह स्वाभाविक भी था क्योंकि किसी भी ग्रन्थमें ऊर्मिलाकी कथा नहीं मिलती। ऊर्मिलाका केवल इतना ही परिचय सत्योपाख्यान मिलता है—

एतस्मिन्नन्तरे राजा आहूयलक्ष्मणं पुनः।
ऊर्मिला च विधानेन लक्ष्मणाय स्वयं ददुः॥

गोस्वामी तुलसीदासजीने ऊर्मिलाको जानकीकी छोटी बहन बताया है—

जानकी लघु भगिनि सब सुन्दर सिरोमनि जानि कै।
सो दीन्हि तनया ब्याहि लखनहि सकल बिधि सनमानि कै॥

—बालकांड

वाल्मीकि रामायणमें केवल इतना ही दिया हुआ है—

अब्रवीज्जनको राजा हर्षेणाभि परिप्लुतः।
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया॥

प्राचीन चरित्रकोशमें ऊर्मिलाको सरीध्वज (जनक) की कन्या बताया गया है। इससे अधिक ऊर्मिलाका कोई वर्णन कहीं नहीं मिलता। वाल्मीकि रामायणके उत्तरकांड (१०२) में यह वर्णन मिलता है कि अपनी पत्नी ऊर्मिलासे लक्ष्मणके दो पुत्र हुए अंगद और चंद्रकेतु। अंगदने अंगदिया नामकी नगरी स्थापित करके वहीं शासन किया (१०२)

तात्पर्य यह है कि ऊर्मिलीय महाकाव्यके लिये कविको केवल अपनी प्रयिभा और कल्पनाका ही आश्रय लेना पड़ा और इसमें कोई सन्देह नहीं कि कविने अपनी प्रतिभा शक्तिसे कल्पनाको जो नवीन श्लाघनीय जीवन दिया है वह श्लाघनीय है।

मैं कविको हृदयसे साधुवाद और बधाई देता हूँ। मुझे विश्वास है कि कविकी लेखनी यहीं पर विश्राम नहीं करेगी, वह और भी उद्दीप्त होकर अन्य नवीन काव्योंका सर्जन करनेमें समर्थ होगी।

छोटी पियरी, काशी
ज्येष्ठ कृ० ४, सं० २०३० वि०

सीताराम चतुर्वेदी

# समर्पणम्

श्रीमद्भ्योऽपर पतञ्जलिपद विभूषकेभ्यः
पङ्क्ति पावनवरेभ्योऽस्मदविद्या -
गुरुभ्यः प्राप्तशिव सायुज्येभ्यः
श्री पण्डित मुनिवरमिश्रेभ्यः
श्रद्धाञ्जलि - रर्प्यते
काव्यप्रसूनमिदं
सविनयम्



श्री पं० नारायण शुक्ल

प्रधानाचार्य

श्रीनाथ संस्कृत महाविद्यालय

# ऊर्मिलीयमहाकाव्ये

## प्रथमः सर्गः

ईशे विश्वमिदं प्रोतं शब्दार्थैः समलङ्कृतम् ।
अवगन्तुं गुरून् वन्दे उमेशौ पितरौ शिवान् ॥ १ ॥

ध्यात्वा यस्याः पादाम्भोजमेधन्ते वै सम्यग्बालाः ।
शास्त्रीयश्रौतानां ज्ञानैस्तन्वन्तो वैदुष्यं स्वीयम् ॥ २ ॥

कमलसंस्तरसंस्थितविग्रहां
स्फटिकहारयुतां करपङ्कजाम् ।
अभययाचकभक्तजनार्तिहां
नमति बोधमयीं नुतशारदाम् ॥ ३ ॥

जगद्वन्द्यामम्बामुदयमभियाचेऽत्रभवतीं
विषीदन्तं बालं करणविकलं पूरयतु माम् ।
न मन्त्रो मे तन्त्रं विशति हृदयं त्राणदमिह
कथन्ते सेवेऽहं कमलचरणौ मानसहरौ ॥ ४ ॥

विद्यावार्धिं तरितुमनसच्छात्रवृन्दान् सुवृत्तैश्
शीलै र्दान्तैः प्रणयमधुरैश् शास्त्रवैदुष्यतर्कैः ।
सायं प्रातः प्रतिनिशमहः प्रापितुर्ज्ञानराशीन्
श्रीमन्मिश्रान्मुनिवरगुरो र्लब्धविद्यो यशस्वी ॥ ५ ॥

साक्षाच्छिवान् गुरुरिव स्वमतप्रवक्तॄन्
वैदग्ध्यतर्कप्रवरै र्मधुरै र्वचोभिर् ।
वादे विपक्षविदुषो जयतो विशिष्टान्
वन्दे प्रियौ स्वजननीजनकौ गुरूंश्च ॥ ६ ॥

लक्ष्मीं पूर्णां विनयमसृणां प्रेमसिन्धुं प्रसन्नां
चान्द्रश्रीभासिकुमुदलतां सेव्यमानां कलाभिः ।
शाम्यं तेजो बहुसुदधतीं धर्मरत्नां श्रिताजि
स्वाम्बां धीरां सुखदुःखसमां नौमि नम्रेण मूर्ध्ना ॥ ७ ॥

नैशा यामा दिवससुलभा आत्मबोधे व्यगच्छन्
ईशध्यानात्तवममभिदा दोषहन्तु र्मुमुक्षोर् ।
यस्याप्येतं व्यवहृतिकृतो युक्तिरम्यं प्रतीक्ष्यौ
पादौ वन्दे सविधि कमलेशस्य वैदग्ध्यभाजः ॥ ८ ॥

आसीन्महीक्षितां मान्यो निमिर्नाम नराधिपः ।
कोशो राज्यो बलं तस्य प्रजारक्षणसाधनम् ॥ ९ ॥

पुरुषे तच्चतुर्विंशे जनकोऽभून्नरेश्वरः ।
निपुणः शस्त्रशास्त्रेषु शासितोत्पथशालिनाम् ॥ १० ॥

राजकार्यं दिवारात्रौ कुर्वन्नपि महामनाः।
जीवब्रह्मणोरेकत्वं सदा मनसि भावयन् ॥ ११ ॥

हर्षाऽमर्षभयाक्षुण्णः सुखदुःखविवर्जितः।
अशक्तो मात्रिके स्पर्शे योगिराजो महाद्युतिः ॥ १२ ॥

तपसा तेजसा तस्य विनयेन च शिक्षया।
आसन् प्रकृतयः सर्वा स्वयमेव नियन्त्रिताः ॥ १३ ॥

न न्यघ्नन् परमर्माणि धनं स्वार्थञ्च जीवनम्।
पारदार्यादिदोषाणां शब्दमात्रे व्यवस्थितिः ॥ १४ ॥

नाधयः प्राभवन् तासु व्याधयश्चाऽपिकुण्ठिताः।
धनधान्यप्रजाकीर्णं गृहं साम्ना विभूषितम् ॥ १५ ॥

वेदाऽभ्यासे रता विप्रा यजने याजने स्वके।
शिक्षणे श्रुतिशास्त्राणां दाने प्रतिग्रहे तथा ॥ १६ ॥

शूद्रा वैश्याश्च राजन्या ये चाप्यन्येऽन्त्यजादयः।
सेवा-वाणिज्यरक्षाभी राष्ट्रं स्वं समवर्धयन् ॥ १७ ॥

काले वर्षति पर्जन्यो मही शस्यसमाचिता।
उदपद्यन्त पर्याप्तं दुग्धमन्नं फलं रसाः ॥ १८ ॥

हस्त्यश्वरथपादातं बलं भीमं चतुर्विधम्।
जगतो ग्रसने शक्तं गिरीणान्तु विभेदने ॥ १९ ॥

महाऽस्त्रैरस्त्रशस्त्रैस्तु द्वीपान्तरसुलक्ष्यकैः।
निरन्तरं कृताभ्यासं किमु शत्रुस् तृणं यथा ॥ २० ॥

मिथिला राजधानी तु राजर्षेरमितौजसः ।
ह्रेपयन्ती पुरी रम्या दिवि देवपुरी श्रिया ॥ २१ ॥

प्रत्युपनगरं रेजे शृङ्गाटकमनेकशः ।
अयस्स्तम्भेषु रत्नानि रोचिष्मन्ति पदे पदे ॥ २२ ॥

भासयन्ते स्म नगरीं राजपथान् हि सर्वतः ।
निष्पंकः नीरजः पथ्याः प्रीयन्ते पथिकान् सदा ॥ २३ ॥

हेमराजतरत्नानि वासोऽलङ्करणानि च ।
आपणान्यभिगुप्तानि शतशोऽप्यभवन्मुदे ॥ २४ ॥

प्रासादा राजदाराणां हर्म्याणि धनिनां तथा ।
सर्वेषां हि गृहास्तत्र चतुर्भूमाः सुखावहा ॥ २५ ॥

नियन्त्रितातापशीताः सर्वर्तुप्रियकारकाः ।
सुखिताः प्रकृतयः सर्वाः सरांसीव हिमात्यये ॥ २६ ॥

पितरमिव राजानं प्रजाः पुत्रसमास्तथा ।
मिथोऽपश्यन् जनाः सर्वे भूपोऽपि धरणीपतिः ॥ २७ ॥

सुखितस्य विदेहस्य साध्वी सुनयना सती ।
पत्नी मनोरमाऽसूत कुमारीं नु महाद्युतिम् ॥ २८ ॥

राजधान्यां पुरे ग्रामे राज्येऽध्वनि राजमार्गके ।
महो महाँस् तदा जातो गेहे गेहे जने जने ॥२९॥

ऋषयो ब्राह्मणाश्छात्रा अनाथा ब्रह्मचारिणः ।
शूद्रा वैश्याश्च राजन्या ये चाप्यन्येऽन्नकाङ्क्षिणः ॥३०॥

मोदकादिसुभोज्येन तर्पिता विधिमार्गतः ।
सौवर्णकलितं वासो दत्तं तेभ्यो यथारुचि ॥३१॥

पुरोहितं शतानन्दं महाप्राज्ञं महाद्युतिम् ।
आनयामास यत्नेन मंत्रिभिः प्रवरोत्तमैः ॥३२॥

महार्हरत्नालङ्कारैर्वसनैर्विविधैश्शुभैः ।
ऋषिः सुपूजितस्तस्याः सम्यग् भाग्यमवर्णयत् ॥३३॥

षस्रे द्वादशे संस्कारं जातकर्माप्यकारयत् ।
धात्रीमानन्दलहरीं नाम्नोर्मिलां व्यधात् प्रभुः ॥३४॥

चन्द्रो निराकृतस्तस्याः मुखरूपेण सम्पदा ।
पद्मं सङ्कोचमाश्लिष्यत् केशैर्हि भ्रमरा जिताः ॥३५॥

सूक्ष्मा द्विजावलिः सान्द्रा कान्ता शुभ्रातिनिर्मला ।
तदुपमानमारूढं माध्यमस्या निराकुलम् ॥३६॥

दिवि भूव्यन्तरिक्षे च देवो मानव एव वा ।
नेवं सचेताः सम्प्राप्तः दृष्ट्वा तां न दुःखं त्यजेत् ॥३७॥

दिने दिने वर्धमानां कलां चान्द्रमसीं यथा ।
दर्शं दर्शं पिता माता पुष्यतः सागरोऽनिशम् ॥३८॥

राज्यस्थ धुरं महतीं गृहपरिजनयोस्तौ ।
जातीस्रजं धारयन्तौ खिद्यतो न महाबलौ ॥३९॥

व्यतीयुश्शरदस्तिस्रो भासो हि तडितस् समाः ।
गुरुप्रेरितो जनकोऽङ्कमारोप्योर्मिलां शुभाम् ॥४०॥

दक्षे पत्नीं समारोप्य सौवर्णासनमास्थितः ।
स्वस्तिमन्त्रान् समुच्चार्य गणेशविष्णुवाग्रमाः ॥४१॥
अन्यांश्च विविधान् देवान् प्रतिष्ठाप्य समर्चयत् ।
करौ संयोज्य यत्नेन मनुवर्णानुदाहरत् ॥४२॥

निनादिवीणां वरदण्डमण्डितां
करेण मालां स्फटिकैः पिनद्धाम् ।
सुहंसपत्रां कमलासनस्थां
नमामि वाचं मुदमावहन्तीम् ॥४३॥

दयां दधानं हृदये गजास्यं प्रपन्नरक्षाध्वरसज्जशस्त्रम् ।
सुवर्णमालोरुचिरक्तगात्रं नमामि देवं वरदं शरण्यम् ॥४४॥

निरीक्षतेऽन्धो वधिरश्शृणोति
विवक्ति मूको प्लवतेऽपि पङ्गुः ।
गिरिं दरिद्रो लभते सुराज्यं
बलेन विष्णोश् शरणं व्रजेम ॥४५॥

देवाऽदेवै र्मथितजलधे निःसरन्तीं रमाम्बां
धृष्णग्ध्वान्तग्रऽसितभुवनाऽऽलोकदानाद्धसन्तीं ।
दर्शं दर्शं मुदितवदनान् कुर्वतीं स्वप्रकाशैः
मायाम्भोजे विहितवसतीं त्राणकर्त्रीं नमामः ॥४६॥

वचोऽतिशेते भवतीस्वरूपं
मनोनुभूतं विषयं जिहीते ।
यथाविधं कल्पितमेव भक्त्वै-
निधाय स्वान्ते शममेमि मातः ॥४७॥

ऋषिस्ततो वर्णमालां सुस्पष्टां सुमनोहराम् ।
हृद्यां सङ्ग्राहयामास कुमारीं सुरवन्दिताम् ।।४८।।

वेदाङ्गोपाङ्गशास्त्रेषु चतुष्षष्ठिकलासु च
द्वित्रवर्षेषु नैपुण्यं चार्वङ्गी सा समभ्यसत् ।।४९।।

रूपदाक्षिण्यविद्याभि र्मधुरै र्हृद्यभाषणैः ।
निदेशपालनै र्वृत्तैः सद्भिः सुख्यातिमागता ।।५०।।

ताराभिरिव राज्ञीभिः मान्याभिरुडुराडिव ।
जनकस्तत्रसम्वीतः प्रार्थितो योगिराड् भृशम् ।।५१।।

चिकीर्षितं विधेर्यत्तं ज्ञातुं कः प्रभवेदिह ।
स्रग्भूषाचन्दनैर्गन्धै र्वासोभि र्बहुमूल्यकैः ।।५२।।

आराधितं वयो वर्ष्म प्रियमात्मपरस्य च ।
तदिदं जरसा क्रान्तं स्वस्यां अपि न रोचते ।।५३।।

जनुषाऽलङ्कृता योन्यो भोगार्थं बहुलक्षकाः ।
निवृत्तवृजिना जाता विपत्प्रोषक - बाहुगे ।।५४।।

पतिं ज्ञाननिधिं प्राप्य त्वादृशं हतदूषणम् ।
सेवमाना दिवारात्रौ वञ्चिता ज्ञानराशिना ।।५५।।

दीपकोन्तस्तलं भासं स्वं ग्राहयितुमक्षमम् ।
रता ग्राम्यसुखे नार्यः स्वान्तं त्वद्बोधविग्रहम् ।।५६।।

हतप्रायं मनोऽस्माकं मङ्गलानवलोकनात् ।
तदूर्मिलाविवाहेन सद्यः प्राणय मा चिरम् ।।५७।।

वयो न्यूनत्वमाशङ्क्य संशयं न समाश्रयेः।
रजः सञ्चरणात्पूर्वं कन्यादानमनुत्तमम् ॥५८॥
याज्ञवल्क्यो महायोगी परिणेतुं यवीयसीम्।
दिशति वरवार्यत्वं न तु तद्दानयोग्यताम् ॥५९॥
ऋषयोऽन्ये यतस् स्वामिन् परार्थाय धृतव्रताः।
रजस्वलाप्रदानेन दोषमाहुस् सुपुष्कलम् ॥६०॥
विज्ञातुमान्तरं भावं पृच्छायां विनियोजिताः।
युष्माभि रुदितो योऽर्थः मद्धृदा स पुरोधृतः ॥६१॥
विवेक्तुमीशं चरमात्मनीनं
विभिन्नराज्यीयनयं विशेषं।
प्रजासु सक्तं स्पृहणीयभावं
कुलीनसद्वृत्तवरेण्यकान्तम् ॥६२॥
वरं सुयोग्यञ्च विचेतुकामो
मनोऽभिरामाद् विनिवेदनात् प्राक्।
निदेश्य लग्नो जनरञ्जने खे
प्रतीक्षमाणो हि दयां मुरारेः ॥६३॥
गर्गे कुले श्रुति विहित्रिमधर्मसेतो
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुर्।
नारायणोऽचकथदौर्मिलकाव्यबन्धे
सर्गे जनुः प्रथमके जनकोर्मिलानाम् ॥६४॥



ऊर्मिलीयमहाकाव्ये

## द्वितीयः सर्गः

उदन्तमाप्तुं वरमेषितुञ्च
प्रजासु युङ्क्ते स्म चरं मनीषी।
स्वशेषु मुख्यं पुरतो विलोक्य
सदो गृहं तद् विजनं चकार॥१॥

करौ हि संयोज्य पदौ निधाय
नतेन मूर्ध्ना विनतिं विधाय।
श्रुताऽनुभूतं सुमतं प्रमाणैः
प्रवक्तुमैच्छत् धरणीपतिं सः॥२॥

निवेदये यद्भवतां समक्षे
कटु प्रियं तत् सहतां नु राजन्।
हिनस्ति तापं हि शरीरभूष्णु
कषायतैक्ष्ण्यं न तु गौडमम्भः॥३॥

निदेशवर्ती प्रथमं पुरीणां
मुखे प्रविश्याऽऽशु चमूं विशालां।
च्युतिं विचिन्वन् महतीं सुतन्वीं
विगाह्य नापं चतुरङ्गिणीं ताम्॥४॥

अगृध्नु सैन्यै र्वनमक्षिकाऽपि
प्रतिक्षणं मण्डलितान्त्य सीमाम् ।
अप्राप्तपत्रा किमु भूमिपस्य
प्रवेष्टुमीशीत न कोऽपि जीवः ॥५॥

पुरः प्रतीचीं दिशमुत्तराञ्च
पदात्पदं मार्गितवानजस्रम् ।
यदा सुराज्यं हितमेव धत्ते
कदापि निम्नां न तु वैरबुद्धिम् ॥६॥

प्रजासु शान्ति र्विमला विराजते
हृदोपगूढा सहकारितां याः ।
सम्मिलय राष्ट्रं शिखरं नयन्ते
न पातयन्ते स्वहितै र्विदग्धाः ॥७॥

जनास्त्वदीयाः परराष्ट्रजाश्च
कृतेस्तवं फुल्लमुखाः प्रकुर्वते ।
अमात्यमुख्या ह्यधिकारिणोन्ये
समृद्धदेशं सुरलोकमाहुः ॥८॥

समेति भीति र्न हि कामदास्य-
मवैधस्वातन्त्र्यलवो न भाति ।
यदेव कार्यं प्रकृतिप्रियं तत्
त्वया ततं नाथ निवेदनात् प्राक् ॥९॥

वनान्तमासाद्य ऋषिसहस्रं
श्रुतींश्चतस्रो निगमान्तविद्याम्।
कलाः समग्रा रसदर्शनानि
सुजन्यबोधं धनुमार्गणानाम् ॥१०॥

प्रसारसङ्कोच - पुरःसराणाम्
ददाति निःस्वार्थपरं हि राज्ये।
असङ्ख्यछात्रान् महतो महौजसो
विशिष्टबुद्धीन् विजितेन्द्रियान् यत् ॥११॥

प्रशिक्ष्य राष्ट्रं सुपथि प्रयुक्तं
हृदं सुबद्धं महदैक्यबुध्या।
अशिक्षिता ह्यत्र नराश्च नार्यः
कृतेऽपि यत्ने नहि यन्ति दृश्यताम् ॥१२॥

उरो ललाटे मणिबन्धग्रीवे
पदो र्नसि श्रोत्रभुजे च शोणौ।
सुवर्णरत्नाकलिताङ्गशाखाः
सुधांशुतुल्या नरनायिकाश्च ॥१३॥

क्षुमाजभास्वद्वसनैः सुगन्धै
दिशः समीरान् विदिशश्चतस्रः।
प्रसादमाधुर्यमयान् सृजन्ति
विलोक्य वासं सुखदं जनानाम् ॥१४॥

रुचि र्न स्वर्ग्ये सुरमानवानां
विषज्जते काऽपि कदाऽपि कान्ता ।
यतो हि भौमं भुवनान्तरेऽपि
ददाति मोदं नहि पुण्यशान्तिः ॥१५॥

सुरेन्द्रलोको बहुपुण्यराशीन्
अपेक्षते नात्र समे समर्थाः ।
समाप्तुकामा विषये विषक्ता
स्तवैव राज्यं सहसा विशन्ति ॥१६॥

मृति न सूनो जंनको मनस्वी
अकालमृत्युं जननी सुधीरा ।
यशो विघातं न श्रियो वियोगम्
अरुन्तुदं याति न दुःखयोगम् ॥१७॥

हिरण्यरूप्यं बहुमूल्य - रत्नं
प्रभूतकुप्यं तुलया विहीनम् ।
सुपुत्रपौत्रैस्तु कलैः प्रफुल्लं
गृहं प्रजानां धरणीषु नाकम् ॥१८॥

अपांसुला धर्मधुराध्वनीना
असत्पथे नो धृतसन्निवेशाः ।
न चाऽपि वैधव्यभुजोऽत्र नार्यो
नरा न वैधुर्यभुजो भवन्ति ॥१९॥

## द्वितीयः सर्गः

पयोदमाला समये तृषार्ता
जलेन तृप्तां धरणीं विधत्ते ।
विरूढसस्यै रसवत्फलान्नैर्
जनाः सुवित्ता न विदन्ति कृच्छ्रम् ॥२०॥

प्रसारसोकर्ममयान् श्रुतिज्ञाः
भवे रता दिव्यशमाय यज्ञान् ।
महर्षयो धूतमलाः प्रशान्ताः
विधेयबुद्ध्या परिशीलयन्ते ॥२१॥

न कोऽपि विद्वान् जुषतेऽनुतापं
प्रशिक्षितो मुह्यति वा स्ववृत्यै ।
कलाकृतो मूर्ध्नि पदं श्रयन्ते
वणिक्पणश्चुम्बति व्योमश्रृङ्गम् ॥२२॥

कृषि र्न क्लेशं वहते सुसाध्या
महोदयो दुग्धरसान्नसम्पदाम् ।
पिपर्ति सद्मानि महाधनानां
कृषीबलानां धृतिसम्मतानाम् ॥२३॥

विद्याधुरीणाः कुशला कलासु
सङ्गीति - व्यापार - कृषिप्रसक्ताः ।
रताः क्रियायां परिणयन्त्रकस्य
द्वित्रांकभिन्ना न महाङ्कभिन्ना ॥२४॥

आवाचि सीम्नो नगरीः प्ररूढा
प्रविश्य वेशं वणिजां विधाय।
क्वचिद्बटुत्वं श्रुतिसम्प्रबोधैः
श्रुताप्रवृत्तिः खलु चिन्तनीया ॥२५॥

अथर्वऋग्सामयजुः प्रवक्ता
सुभाष्यमेषां कृतमस्ति येन
नवीनमस्त्रं शतलक्षहन्तृ
स रावणो नाम कृतान्त एव ॥२६॥

नवाः वधूः कामयते ह्यजस्रं
हिनस्ति साधून् भरते पिशाचान्।
पिनष्टि धर्मं परिपात्यधर्मं
भयेन कम्पन्ति सुरेन्द्रभूपाः ॥२६॥

महार्हरत्नानि सुवर्णभित्तौ
निबद्धभूमौ मणयः सुनीलाः।
प्रलम्बिवज्रं गृहदेहलीषु
वमन्ति रोचींषि ततोऽनुलंकाम् ॥२८॥

तमो विलीनं गृहकन्दरासु
रजो न शेते प्रभुवर्तनीषु।
पुरा निवृत्ता धनधान्यभूषु
निवासमाप्ता हृदि नायिकानाम् ॥२६॥

सुरारिभूष्याणि हिरण्मयानि
विसारिशोचिर्मयभूषणानि।
शरीरसंस्कार्यसुमार्जनानि
हरिन्मणीतन्तुसुचेलकानि ॥३०॥

सपादलक्षैः खलु पुत्रपौत्रैः
समस्तव्यस्तैरसुरारि - लोकम्
जगन् निकृन्तन् स्वयमेव शक्रं
बलानपेक्षी भयदस्त्रिलोक्याः ॥३१॥

गतिः समा खे भुविवारिराशौ
ससाधनस्यास्यनिवासशक्तिः ।
रूपान्तरं सूक्ष्ममनोहरं वा
दधातुमीशः सपदि क्षणे क्षणे॥३२॥

रणेऽभियुञ्जन् प्रतियोधिमुख्यै
र्बलं तदर्धं हरते सुजेयैः।
सुरैः सशक्रै र्वरुणादिभिश्च
अवध्यता तस्य कृता हि ब्राह्मे। ॥३३॥

विधि र्न बिष्णु र्न हरोऽपि भङ्क्तुं
निदेशमाप्ता किमुतान्यदेवाः।
यमेन तप्तोऽखिलभूतसर्गस्
स तेन कम्पन्नधुना प्रशिष्यते ॥३४॥

त्रयीस्मृतिज्ञाप्यसहस्रमत्या
विशिष्टवर्णाश्रमधर्मकान्त्या ।
समेधिता भूस्तव तेन चिन्त्या
सुराजतेजः प्रभयाऽप्रधर्ष्या ॥३५॥

करं विनेतुं न समृद्धिभाजः
ऋषि र्महर्षि र्मनुजस्तपस्वी ।
शरीररक्तं चिनुते तरस्वी
प्रजाः प्रदुग्धे भयसुस्रुता यः ॥३६॥

अलंकृतो हारि सुभूषणैः स्वै
रसृग्भृतो हाटकपीतगात्रः ।
घटो वपुष्मान् कृतपापराशि-
र्धृतोऽनुलङ्कां हतपुण्यलेशाम् ॥३७॥

अनल्पतल्पे मसृणेऽतिरम्ये
सुविष्टरे दंशविवर्जिते च ।
न भाति शीतं न तु तापतैक्ष्ण्यं
प्रजागरा भीतिरतिर्न यत्र ॥३८॥

निषण्णमालिङ्गति स्वापसेतु-
र्निशाविरामः क्षणवद् विराजते ।
क्षुधापिपासेऽङ्कमितो न दूरं
चिता नु चिन्ता च भयं विभातः ॥३९॥

पतन् विचित्रे शयनीय रत्ने
सुषुप्ति - संश्लेष मुदा गृहीतेः ।
निशावमानेन कृशातिलीढा
अहर्मुखं चुम्बति दिङ्मुखस्य ॥४०॥

पराश्च बध्वो हृदि लग्नकामा
अलब्धनाथा धृतवैरभावाः ।
द्रुह्यन्ति विक्षिप्तसुषुप्तये ताः
निन्दन्ति पार्श्व - प्रणयेषु लग्नाः ॥४१॥

स्वपन् सुखं दिङ्मुख इत्यपश्यत्
मया नु शिष्टं भुवनं बिभीते ।
सुकर्मणोऽधर्मरुचि नु याति
न विद्यते यत्रसुकर्मवार्ता ॥४२॥

महासुकृत्या कृतिनो व्रजन्ति
महेन्द्रलोकं सहसा विशामि ।
गुहा गिरीणाम् पुरुहूतदेशाः
सुरा शरण्या शरणं श्रयन्ते ॥४३॥

त्रिलोकसूरा नतमस्तका स्वयं
न मत्तुलां सोढुमिह क्षमा वै ।
विचिन्तयन् द्राक् शयितोऽह्नवद्य
निरीक्षितं राजभयं हि स्वप्नम् ॥४४॥

ततः प्रबुध्याऽह्वयते स्म सभ्यान्
पुरस्तु तेषां प्रथितं तदैतत् ।
असृग्घटोद्भासिकुलं सराष्ट्र
मगण्यकष्टानुभवं विनङ्क्ष्यति ॥४५॥

शये सबाधे मनसोऽनवस्थे
दिवाऽनुभूतं विकृतं विभाति ।
शयालुदृष्टं यदि सत्यवस्तु
कथन्नु लभ्येत सुराज्यतन्त्रम् ॥४६॥

निवृत्तचिन्ताभयरुङ्मनुष्यो
निशान्तस्वप्नं हृदि सन्निधत्ते ।
न हीदृशं ते विफलत्वमञ्चेत्
ततोऽत्र कञ्चिद्विधिमाशु दध्याः ॥४७॥

सभेयवाचो हृदि सम्प्रधार्य
परामृशन् युक्तपथं मनस्वी ।
स्वदेशबाह्ये तव राजसीम्नि
निखातवान् भूकुहरे घटं सः ॥४८॥

समानकृत्या स्वकुलं प्ररक्ष्य-
मजेयशत्रुः सुषिरं विनीतः ।
स रावणो लब्धमहाप्रमोदो
विचारयन् गाढशयं चुचुम्ब ॥४९॥

निपीयतां कर्णसुखं महार्थं
गुणाढ्यसौमित्रिकुमारकामः ।
श्रितोऽध्यऽयोध्यं हरिकल्परामः
तमूर्मिलाकाम्यवरं वृणीष्व ॥५०॥

सुलक्षणो लक्ष्मणनामधेयो
मृदुस्वभावः सरलो विनीतः ।
पितृप्रियो भ्रातृवशंवदोऽसौ
स्निग्धासु चाम्बासु सदानुरक्तः ॥५१॥

द्विष्टे परस्मै न परोऽपि तस्मै
प्रमादतन्द्रे न समीपमेतः ।
असत्यवादी नहि हास्यक्रीडे
त्रयीगुरूक्तं न विलङ्घ्यतेऽसौ ॥५२॥

दृढप्रतिज्ञो धृतशेषशक्तिः
शत्रुञ्जयो ह्रेपितमानिवर्गः ।
विलोक्य तं देहभृतां वरेण्यं
प्रयाति सन्देहपदं प्रजापतिः ॥५३॥

गरीयसो भ्रातृचतुष्कवर्गात्
रामस्य तेजः प्रथितं त्रिलोक्याम् ।
कुमारिकाद्वेष्यसुनीलवर्णात्
विवाहयोग्यं तमहं न मन्ये ॥५४॥

निवेद्य एवं प्रणिधौ विदध्वे
प्रयाति भूपः स्मरति स्म विष्णुम् ।
निधेयदेशं कलशेन दुष्टं
विचेतुमाज्ञाप्य गतो निशान्तम् ॥५५॥

गर्गे कुले श्रुति विहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुर् ।
नारायणोऽचकथदौर्मिलकाव्यसर्गे
वृत्तं स्पशो ज्ञपयते सुचितं द्वितीये ॥५६॥



## तृतीयः सर्गः

ब्राह्मे मुहूर्ते शयनं विसृज्य
चैलाजिने दर्भमयाऽऽसिते स्वयं ।
स्नात्वोपविश्यासुगतिं निरुध्य
ब्रह्मण्यचिन्त्ये तु मनो न्यवेशि ॥१॥

ततोऽध्यवात्सीद्दमुनः सुशाला-
मग्नावहौषीदतिथीनतर्पीत् ।
समक्नछात्रान् विदुषो विशेषा-
नतर्पयत् प्रार्थितसम्प्रदानैः ॥२॥

दृश्ये तते भूवलये परस्मिन्
लोके सुखं यत् मनुजेश्वराणाम् ।
येनास्ति साध्यं सुभृते फलान्नैर्
न्यायासनस्थो मिलितो मनुष्यैः ॥३॥

पक्षे स्वकीये विधिवेदिदक्षैर्
युक्ते प्रयुक्ते गुणदोषदग्धे ।
सुमेधसा हंसजनेन साक्ष्ये
कृतोऽभियोगोन्तफलानु घोषः ॥४॥

निर्णयकृत्यैर्जनता प्रफुल्ला
मनः पुनीतं ह्यभियोग - भाजाम् ।
पन्थाः प्रशस्तो विषये स्थितानां
भूपप्रशस्ति - वंहते सदैव ॥५॥

एवं व्यतीते समये सुदीर्घे
प्रावृट्पयोदा न जलं ददन्ते ।
अवग्रहैः शस्यघनं विशीर्णं
राज्यीयसूरः स्तमित पुरस्तात् ॥६॥

विज्ञापितश्चारमुखेन राजा
ददर्श यत्नं न स्वयं निभाल्य ।
आदेशिकान् मन्त्रविदो विदग्धान्
समीपमानाय्य व्यजिज्ञपत्तान् ॥७॥

वर्षावरोधात् सुतलं वियातं
वनं न कुल्या भजते सुपेयं ।
धारा नदीनां वहतेऽतिहीना
कूपादुदक्तं न जलं प्रभूतम् ॥८॥

अकारणात् कार्यमिदं हि दृश्यते
कार्येण हेतोरनुमा कथं स्यात्।
वस्तुप्रसिद्धिर्नहि कारणाच्चेत्
स्नेहं प्रकुर्युः सिकता यथेच्छम् ॥९॥

वायोः सुगन्धः नभसोऽतिशैत्यं
भवेत्तु भूमेरवबोध - शब्दः।
दैवेन देवं स्वदते मनुष्यो
न सेचते कर्मठभोगभुग्भ्यः ॥१०॥

अवर्षणं पापफलं ब्रवीति
शास्त्रं न स्वीयं न प्रजासु बुध्ये।
दिष्टं हि लोकान्तरकर्मकल्पं
मनो निरुन्धेऽखिलविघ्नवन्धे ॥११॥

कालस्य हेतुं क्षितिपं गदन्ति
प्रजा यतस्तस्य वशे वसन्ति।
चक्राधिरूढो न गतिं तदन्यां
जनो विचित्रां कुरुते कदापि ॥१२॥

उस्रैरशीतैस्तपनो रसाया
रसं प्रगृह्याष्टगुणं प्रदत्ते।
राजा तु षष्ठांशकरं विकृष्य
शतैर्हृतां त्राणकृतिं तनोति ॥१३॥

प्रजा सुरक्षा यदि राजभृत्या
फलं सुराज्ञो विधिवत् प्रदिष्टम्।
चेदन्यथाऽराजकमेव युक्तं
किं तेन राज्येन धराधिपेन ॥१४॥

स्वार्थं परित्यज्य जनाः सुरक्ष्याः
श्रेष्ठेन भूपेन दयापरेण।
लग्नेन तस्मिन् सुखसाधनाय
वणिक् पणासक्तधिया समेन ॥१५॥

परेष्टघातं सुनयैः प्रसाध्य
प्रवञ्चनापूर्णहृदाऽधमेन।
स्वार्थः परार्थो न विचारणीयौ
येनाऽतिनीचेन महाऽऽत्परेण ॥१६॥

विद्याचणा भात नयप्रभेदा
वैदुष्यधूताऽशुचिशोकमेघाः।
विचार्य याथार्थ्यमलं प्रजानां
कुर्युर्हितं राष्ट्रधुरां वहन्तः ॥१७॥

प्राणार्पणेनाप्यसुखं प्रजानां
विनाश्य यायां पदवीं सुराज्ञाम्।
राज्ये वसन्तो यदि मोदमानास्
तथा भवेयं व्यथितोऽपि स्वान्ते ॥१८॥

आवेद्य एवं विरते प्रजानाम्
ईशे प्रशान्ते जनतापतप्ते।
मन्त्रिप्रधानो धृतवेधपक्षः
प्राक्षीद् ग्रहज्ञं भृशमादरेण ॥१९॥

त्रिकोणकेन्द्रेषु धनुर्विलग्नात्
स्वोच्चे शुभा नो खचरै विदुष्टैर्।
दृष्टा युता वा चरणैः स्वकीयैः
पश्यन्ति लग्नं मुदिता निरीक्ष्याः ॥२०॥

सौदामिनीनां विपदां विसर्गान्
प्रकाम्यवृष्टि र्भुवमाशुरक्ता।
निधाय क्रोडे सुसखीं प्रमुग्धा
मानन्दधाराः सुचिरं सुवोढा ॥२१॥

चिन्तापिशाची भयभुग्नदेहा
वृष्टिप्रहर्षै र्जितभीतिशात्रुम्।
निशा तमश्चन्द्रमुखेन नुन्नं
विदेहराजं न पुनः प्रदग्धा ॥२२॥

परं पुरस्ताद् विधिभाग् भवेच्चेत्
सोन्तःपुरीयै र्हलकर्षणेन।
घर्मांशुतप्तां धरणीं लिखेद्वै
अदभ्रवर्षा - जलधिं सृजेयुः ॥२३॥

उद्घातिभूमौ गतिवद्रथस्य
अमात्य - पर्षन्नव - मन्त्रमूढा ।
लोको निरुन्धे न कृतं हि पूर्वैः
शास्त्रानुमोदो दिवसे दिवान्धः ॥२४॥

एवं फलादेशनिदेशनेन
न्याय्यं ग्रहीतुं हि परं विहातुम् ।
बध्वृद्वयाऽऽसक्तहृदो नु भर्तुं
र्मनो न कर्तव्यपथं सिषेवे ॥२५॥

सङ्कर्षणेनात्र सुखस्य लब्धि
र्वर्षस्य भूति र्न मनोऽधिशेते ।
ततः कृषेरुर्वरतां सुभाजां
क्षमाजुषां प्राणभृतां विघातः ॥२६॥

स्तन्यं जनन्याः शरदां द्वयेन
पुष्णाति जीवं न तु जीवनान्तम् ।
हव्यैश्च कव्यैः सुरपितृमोदं
गव्यं पयो रक्षति विश्वमार्यम् ॥२७॥

तृणादिनीरैः सुखसम्प्रदानाद्
अशाठ्यभावात् स्वनिवदेनेन ।
उस्राऽनुरक्ति विदुषा श्रियेत
फलं मनोहारि करे धृतं स्यात् ॥ २८ ॥

सम्प्रेक्षमाणो मुकुटे मुखं स्वं
श्वैत्यं वलिं वै शिरसः शरीरे ।
वयस्तुरीयं सुतहर्षहीनं
निभाल्य वार्द्धक्यहतश्चिचिन्त ॥२९॥

राजा दिलीपो भृशमातुरः सन्
पत्नीसहायो गुरुमध्युवास ।
ध्यात्वा तपस्वी चिरमात्मजेऽसौ
शापावरोधं सुरभेरुवाच ॥३०॥

गावः समस्ता खलु कामदोग्ध्र्यः
संसेव्य काञ्चित् शपनाद् विमोक्ष्येः ।
संघाधिपादीन् सुरवर्यदेवान्
संस्तुत्य धीरो व्रतमारभस्व ॥३१॥

सञ्ज्ञप्त धेनुव्रतसंविधानो
भूपोन्वहं सेवनसज्जमानः ।
गिरौ वने वा चरनात्मकृच्छ्रं
गवापरं नो जगतीममंस्त ॥३२॥

सन्तानकामोऽनुसरन् पदातिः
शुश्राव वाक्यं सुधया विमिश्रम् ।
पुम्भूषणं लौकिकरत्नमृग्य-
मस्मिन्नमुत्राऽपि हितं समीक्ष्यम् ॥३३॥

आत्मानुरूपं सुतमाशुलब्धा
उद्धाप्य सेवां भवनं स्वजस्व ।
वंशस्य कर्तृत्वगुणै रुपेतं
सुदक्षिणायां तनयं स लेभे ॥३४॥

समैः सुसेव्याः: सुरभेस्तनूजास्
तदीयपुत्रा न हलेषु योज्याः ।
अतो न क्षेत्रं महितं कदापि
सीत्यं मया वै वृषरोधि कार्यम् ॥३५॥

असारसंसारविधेयवीथा
बन्धैस्तमोभि र्हतबुद्धिवादे ।
त्रिकालदर्शी समदृङ् महर्षिर्
दृष्टस्तदा नारदवेदिसूरः ॥३६॥

शरीरतेजोजितरत्नराशि
राजीवनेत्रं महतोसुयोगम् ।
राजासने हाटकहारिगात्रे
न्यवेशयत्तं नतमस्तकः सन् ॥३७॥

पाद्यार्घ्यगन्धैः सुमनोवचोभिस्
समीडितो ज्ञाननिधिस्तपस्वी ।
अवर्षशुष्कं कुसुमं विदेहं
संस्नापयन् प्रेमनदे समूचे ॥३८॥

नीहारिपद्मं शुचिसङ्गतं ते
मुखं न लक्ष्मी - लसितं चकास्ति।
वैदुष्यनुन्नं हि तमो वियातम्
ध्रुवं महत्त्वां श्रयते कुतर्कि ॥३९॥

परात्मसंसक्तविचारचारु
मनोगतं भावमयं व्यनक्ति।
परास्य शक्तिस्तपसो महर्द्धि
जनो यथा नो स्वदते तपस्वी ॥४०॥

सम्प्रेक्ष्य एवं स्फुटमाह राजा
दैवात् प्रजानामथ मामकीनात्।
पुण्यात्परार्घ्याद् बहुजन्मलब्धात्
सत्यं भवान् हार्द्रमिदं ब्रवीति ॥४१॥

निपीतभैषज्यमनर्घ्यमस्मिन्
शरीरभाजां मुदमातनोति।
श्रीमन्तमक्ष्णो विषये विधाय
स्वान्तं सुतप्तं भजते सुशान्तिम् ॥ ४२॥

पीयूषजातीयवचोभिरीड्यैः
सुयुक्तिनीरां सुनदीं मनुष्यैर्।
मनीष्यबुद्धैः सकलैः सुपेयां
प्रावाह्य रक्षे नुं हतं कुतर्कैः ॥४३॥

श्रुतिस्मृतिज्ञाप्यविधावधीती
षडङ्ग वेदान्त चतुस्त्रयीषु ।
आन्वीक्षिकीदण्डनयेषु योगो
श्लिष्येत् कथं मोहमतत्त्वमार्गे ॥४४॥

सत्याद् भवेद् वै यदि जीवरक्षा
तेनास्ति लोको विधृतो यथावत् ।
नैवं भवेत्तद् विफलं वदन्ति
शास्त्राणि धर्मेऽधिकृतान्यजस्रम् ॥४५॥

अहिंस्यता धर्मशिखान्तरत्नं
न तत्तुलामाहरतेन्यधर्मो ।
भूपाधिराजैः सुकृताय साध्यो
मेध्योश्वमेधो विहितो हि पूर्वैः ॥४६॥

उस्राऽतिथेयी ससुता सुपूज्या
संसेविता मुक्तिमुदोः प्रदात्री ।
नियोगमर्हन्ति वृषा हलेषु
श्रमस्तदीयो न हिनस्ति धर्मम् ॥४७॥

श्रेयान् स धर्मो रमयेत्स्वराष्ट्रं
कृच्छ्रस्य योगो न भवेत् परस्य ।
शुभस्य तत्त्वं कृतिनो ब्रुवन्ति
भूति बहूना मनुरञ्जनाय ॥४८॥

श्रुतं सुधाम्न्यां वचनं हितैषि
सुधाविमिश्रं विधिना प्रयुक्तम् ।
मुष्टिं हलस्याशु करेण गृह्णन्
क्षेत्रं विकर्षन् विपदां विहन्ता ॥४९॥

देवर्षिवर्ये द्रुहिणात्मजे स्वर्
यातेऽथ निर्दिश्य जनान् विदग्धान् ।
उपेत्य राज्ञो भवनं विमर्शं
समानयद् दोषगुणं विवेक्तुम् ॥५०॥

मीमांसको ज्ञानबलो महर्षी
राजन्यका न्यायविदस्तथान्ये ।
सुरर्षिवाक्यं श्रुतिवत् प्रमाणं
समार्थयन्तायति :कल्पवृक्षम् ॥५१॥

प्रगेतनीं वर्ष्मकृतिं च दैवीम्
विधाय पित्र्यां स्वजनैः समेतः ।
सीरेण सीत्यां धरणीं विकुर्वन्
सीताहतं हारिघटं लुलोके ॥५२॥

चक्षूंषि कान्त्या हरतो घटाद्वै
विदीर्णमध्यात्तनया द्वितीया ।
मृद्वी सुनेत्रा सुदती विचित्रा
पराञ्जयन्ती कमलं मुखेन ॥५३॥

अभूदभूमिश्च शुभेतरस्य
कुतूहलाक्रान्तजनैरगम्या ।
विलोकितालोकपदं न याता
नभस्य वागाह वचो विमृग्यम् ॥५४॥

पुत्रीं ममैता मृषिरक्तजाता
मुरस्य कल्पाममरै नियुक्ताम् ।
धर्मद्रुहां घातमभीष्टमस्या
ज्येष्ठामिमां पाहि सुरार्थनीयाम् ॥५५॥

सीताग्र - संयोग - समाप्तदर्शात्
सीतेति नाम्नाऽभिहिता भवेदियम् ।
प्रागौर्मिलाद् गर्भघटेशयाद् या
वयस्तु पौरस्त्यपदं वहेत ॥५६॥

सम्भूय प्राच्याः प्रवहन् प्रतीचीं
मन्दः समीरोऽजनयत्पयोदान् ।
नीरैर्भृतान् जम्बुतुलान् सुधीरान्
संलोक्य मोदांकुरितः समाजः ॥५७॥

खमाप्लुवन्तो जलदाः सिसिञ्चुः
नीरन्ध्रघोरा वनसम्प्रमोकैः ।
तडागवापीसरितः समुद्राः
श्लेषै निमग्नां धरणीमकार्षुः ॥५८॥

प्रवर्ष - हर्षाप्लुत - वारिराशौ
गूढः सराष्ट्रोऽवनिपाग्रणीः सः।
मनो वचोऽगम्य हरिं विनीतस्
तुष्टाव रागैर्गलदश्रुनेत्रः ॥५६॥

भयेन यस्मात् पवनः प्रवाति
हिमांशुसूरौ सृजतः प्रकाशम्।
पयोदमाला ददते सुवारि
तमादिदेवं शिरसा नतोस्मि ॥६०॥

कृषिप्रशूना पृथिवी सुशीता
अवर्षभीतिर्विलयानुरक्ता।
तपन्ति तापान् शुचः प्रतापा
भवन् भविष्यन् सुखदः समेषाम् ॥६१॥

पुरोभुवां विघ्नपरम्पराणाम्
निराकरिष्णुं जननीं जयस्य।
सीतां स्वनेत्रैर्जलदैर्विलोक्य
मोदानुषक्ता मुदमित्यमंस्त ॥६२॥

वयः प्रशस्या करपीडनं तत्
क्षणेनपूर्वं शमनं नयेत।
ऊढोर्मिलाया अधिवित्तिदोषं
दद्याच्छुभंयुं कमनीयपुण्यम् ॥६३॥

विमर्शपद्मे शयने शयानो
भुजद्वयान्तस्तनयां निवेश्य ।
दातुं प्रियायै सहसा वलिभ्याम्
आगृह्य लक्ष्मीमपरामजानत् ॥६४॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुरः ।
नारायणो गदतिजन्महलात्तृतीये
सीताप्रवृष्टिसुकरं सुखदं स्मसर्गे ॥६५॥



ऊर्मिलीयमहाकाव्ये

## चतुर्थः सर्गः

अङ्के लग्ना नयतिशिखरं मानमस्यान्वयस्य
सिद्धाः साध्याः सुरपतिसुरादैत्यभूमेरधीशैः ।
धात्रीदेवा अवनिमनुजा बाधिता राक्षसेन्द्रैः
सर्वेऽप्येते धरणिसहिताश्लिष्यमाणाः प्रमोदैः ॥१॥

रम्यां बालां कृतकतनुजां भूतिदात्रीं जनानां
स्वच्छश्यामां दलितगहनां विश्वभव्यावतीर्णां
कान्त्या चान्द्रीं श्रियमभिगतां रत्नगर्भाङ्गसूतां
गृह्णीष्वैनां चिनुहि परमां प्राणिरक्षां परार्थाम् ।२।

कञ्जाऽऽभां तां कमलनयनां केशपाशैर्द्विरेफैः
शुभ्रैर्हासैर्मधुरवचनैर्माध्यदन्तावलीभिः ।
स्वच्छैः पीतैः सदशवसनैः कञ्चुकीभूषणैस्त्रै-
र्लीनां पाणौ मृदुघृतवती साश्रुनेत्रोर्मिलाम्बा ॥३॥

केयं श्रीर्नो धरणिमयते विष्णुपद्मं विहाय
रुद्राणि नो त्यजति शकलं रुद्रदेहांशुवन्द्यं ।
वाचांदेवी हृदयकमलं जन्तुसक्तं वृणीते
धात्रीं मंन्ये मनुजनिवहान् त्रातुमत्रावतीर्णाम् ॥४॥

पुत्री प्राप्तौसुमुखि रमणी धर्मनेत्री सतीनां
माया सैषा भुवनजनिका ब्रह्मसाचिव्यकर्त्री ।
यस्यां बिम्बा विधिहरिहराः सूतिरक्षाविनाशान्
कुर्युर्नम्या मनसिमननैस्तर्कमासेदुषी सा ॥५॥

भूमेर्मूलात् सुतनुतनयां नीलरुपां शुभाङ्गीं
दृष्ट्वा राज्ञशी कमलनयना विह्वलाभूदपूर्वम् ।
ज्येष्ठां श्रुत्वा मुदितमनसा हर्षनृत्यन्मयूरी
साम्यं प्राप्ता परिणयविधौ सिद्धिदामूर्मिलायाः ॥६॥

संसूच्यादौ दशरथनृपं स्वागमाङ्कं दिनस्य
लब्धादेशो नियतसमये चन्द्रतारानुकूले ।
ज्योतिःशात्राधिगतयशसं रत्नदानात्सुतोषं
सम्पूज्यासौ प्रवरगणकं प्राहिणोत्तं महर्षिम् ॥७॥

ज्ञप्तर्षिर्यो धृतरयरथं नीयमानं तुरङ्गै-
रध्यारुढो विनयमसृणः श्रोत्रियो ब्रह्मनिष्ठः ।
पद्योद्घातैरकृतविहर्ति राजधानीमयोध्यां
हृद्यं सस्यं शुभदमधुरं लोकयन्नध्यगच्छत् ॥८॥

पुण्यामात्यो नगरसुषमां हर्म्यवीथावतुल्यां
दर्शं दर्शं प्रतिहतरयो भित्तिचित्रं यथासीत्
लोकः स्वर्ग्यो भुवि उदतरत् तत्र वर्तेऽहमेव
एवं चिन्तन् तुरगगतिमत् स्यन्दनं नाऽऽलुलोचे ॥६॥

धूत द्वन्द्वं हरितमणिना लब्धमैत्र्यं सुशीतं
स्वच्छं गच्छत् कलकलरवै नाट्यनृत्येन भाति
दृष्टं पीतं किरति रमणं पापपुञ्जं वृणीते
साकेतीयं विमलसरयू नीररत्नं सुपेयम् ॥ १० ॥

रे रे चेतो यदि तव रुचिः स्वर्गसौख्याय पूता
ब्राह्मे लोके सुरपतिसमं सामगानं विचित्रम्
कर्णैः स्वान्तैः श्रवणमननैः पातुमिच्छेर्यशस्यम्
सद्यः सेवे विमलसरयुं स्नानपुण्याधिवासैः ॥११॥

स्वर्धुन्यापो गिरिधरशिरो भिन्नगात्रावहुत्र
पद्मासक्ता हिमगिरिसरो लब्धवासास्ततः सा
भूमेः स्पर्शात् शुभविलयं कुर्वती स्वच्छतोया
अध्यायोध्यं वहति सरयूर्ह्लादयन्ती नदीष्णान् ॥१२॥

भानोर्दिव्याः प्रखरहृदयास्तापयन्तेऽक्षमाला
आशा सर्वा विरसपवनो नादयन् वात्यदभ्रम्
शैत्यं सम्यङ्नियतमयते वारिराशौ तटिन्या-
माप्लुत्यास्यां स्तवनमननैर्मध्यसंध्याञ्चकार ॥१३॥

अर्च्येशं संकलितशमनः शान्तचेता महर्षिर्-
धीरं यातः कनककशिपुं शीततापानुकूलम्
बाहे वाह्ये विततशयनं पारसीकाभिरूपै-
र्यानं भास्वत् सुललितजवैः सेव्यमानं सुदम्यैः ॥१४॥

सिक्तां शश्वद्दशरथपुरं वीरजुष्यां सुदीर्घां
वेदैः सूर्याऽऽहननफलितैः क्रोशमानैर्मितान्ताम्
द्विघ्नैः षट्कैरमरनगरीं स्पर्धमानाऽऽयतां यां
संसेवन्तेऽकुटिलगतयो राजमार्गाः सुसज्जाः ॥१५॥

मुख्यो मन्त्री दशरथमतो वाजिसूतैः सुक्लृप्ते
अश्वारोहैर्बहुशतमितै - र्नद्धकौक्षेयकुन्तै-
राग्नेयास्त्रैः सुकृतवरणै - र्बद्धपृष्ठोत्तरांशै-
र्गुप्ते याने नतियुतवलिः स्वागतं संचकार ॥१६॥

नम्रे लग्नौ शिरसि जटिले प्रेमसंश्लिष्टहस्तौ
दिव्यां वाणीं विरतमननो ज्ञातसारो मनस्वी
पद्माक्षौऽसौ सरसवचनो भाभिरक्तो जगाद
कुर्वन् धर्म्याऽमृतमयधुरां पुण्यदर्शोऽभवन् मे ॥१७॥

राज्ञो धृत्या भवदनुमतैः साममन्त्रैः सुपूते
राज्ये धन्ये नगरबहुले भीतिवर्जे सरक्षे।
सामात्योऽयं प्रकृतिसहितो भूपवंद्यो धनश्री-
रैन्द्र्यां शक्रो दिविदशरथो राजते सूनुरत्नैः ॥१८॥

संसाराब्धेः कुसुमफलितैः क्रोधकामैः सपत्नैः
दुर्जेयान्धैस्तिमिरगहनैस्त्रायमाणाऽसुभाजाम्
आत्मज्ञानाऽरुचिकृतिमतां ज्ञानदित्सुं भवन्तम्
संलक्ष्याभून्मुदावलसितं पृच्छ्यमानं यदास्ते ॥१९॥

मध्ये गच्छन् जनकसचिवो मण्डितः सैन्यसङ्घे-
स्ताराग्रामैर्वलयितरथोऽमात्यपृष्ठानुयानैः ।
पूर्णां चान्द्रीं नभसि गुरुणा दत्तसंक्रान्तियोगां
कम्रां लक्ष्मीं वहति सुमनाः स्वच्छकौशेयवासाः ॥२०॥

प्राप्तायोध्यं प्रथिततपसं तन्त्रमन्त्रागमेषु
लब्धख्यातिं रहितरजसं योगधूताशुचित्वम्
संघीभूतानतुलितजनान् द्रष्टुकामान् सदर्च्यान्
स्थाने-स्थाने प्रवचनसुधां पाययन्तं सुपेयाम् ॥२१॥

यत्नोद्भूतैर्हिमतरलवैः सेव्यमानं जलीयै-
र्हिम्यैर्वातैरगुरुकुसुमैः - रत्नविद्युत्प्रकाशैः
भास्वत् स्तम्भैः प्रवरमणिभी राजकीयं गृहं यत्
अग्रे यान्तं सुरगुरुसमा मन्त्रिणोऽनीनयत्तम् ॥२२॥

गाढध्वान्तावृतभवरुजो मानवानुद्दिधीषुं
यावच्चक्षुर्ग्रहणविषयो नो शतानन्ददेवः ।
आमोदेप्सुभ्रमरचिकुरैर्दीप्यदिक्ष्वाकुराजैः
स्वागत्याग्राच्छतधृतपदं नम्रमूर्ध्ना सिषेवे ॥२३॥

दीर्घायुष्यं वितरतु विधिः प्राज्यवृष्टि-विडौजाः
आशाधीशाः सुरपतिमुखाः पूज्यमानास्त्वदीयैः ।
राज्यावासैर्ददतु नितरां शत्रुरोगाभिशान्ति
नित्यं क्रीडत्सुतनुतनयैर्भुज्यतां भोगजातम् ॥२४॥

इक्ष्वाकूणां विदितयशसां भानुमान् भानुराशिः
सम्वेश्यैनम् मसृणविमले स्वर्णसिंहासने व ।
दीप्यन्मेरोर्महतिशिखरे स्थाप्यमानं महेशं
श्रौतस्मार्ताकलितविधिनाऽपूजयद् ज्ञानिवंद्यम् ॥२५॥

वीतासक्तः किमभिलषते नास्ति प्रश्नावकाशः
संसूच्यादौ सुधृतचरणः कौतुकाक्रान्तिलक्ष्यः ।
नाथ स्वीयं जनकसुहृदो ब्रूहि वृत्तं मुमुक्षोः
धार्ष्ट्यं तावन्मम तव पुरः क्षाम्यमेतत् कृपालो ! ॥२६॥

उद्यद्भानुश्चमति तमसः काष्ठमासीद्रजन्यां
भीता भीतिर्व्रजति शयितुं वेपमाना गुहासु ।
पुण्यालोकोऽबुधजनमनोरञ्जनापुण्यराशि
तद्वल्लोढेऽगणितजनुषां प्राणिनां मद्विधानाम् ॥२७॥

संसृत्याब्धिप्लवपटुतमं धर्म्यपीयूषमूलं
सद्यः सूते विरतिगहनं भेदरक्षो हिनस्ति ।
आत्माभेदं श्रवणमननैर्योगिभिर्ध्याननिष्ठै—
रन्यज् ज्ञानं क्षपयति मुहुर्ध्येयमात्रावशेषम् ॥२८॥

यद्राजंस्तेऽमृतमयवचो शुश्रुवान् सारगर्भं
प्राप्तानन्दो नु सखि कुशलं भ्राजते खे सुधांशुः ।
भानोरस्त्रैर्विदलिततमा प्रीतिमानुर्मिलायाः
योगो भूयात् परिणयदृढः श्रीमता लक्ष्मणेन ॥२६॥

श्लाघ्यो रामोऽतिमनुजगुणैर्दानदाक्षिण्यशौर्यै-
र्दान्ताचारै- मृदितवृजिनैर्वेदवेदाङ्गतत्त्वैः ।
प्रेमालापै - र्वशितकरणैरस्त्रशस्त्रप्रयोगै-
र्हृद्यां सीतां कमलनयनीं धारयेत् सव्यभागे ॥३०॥

पुण्ये धस्त्रे उषसि समये कौशिकश्चण्डकोप्ये
दैवात्प्राप्तोऽवनिपभवनं भासयन् दिव्यभाभिः ।
ऊचे राजन् त्वममरतरुर्मानितार्थी पृथिव्या-
माशावल्लीं भुवनपतिना योजयेर्म्लायमानाम् ॥३१॥

रामेणाऽथोऽनुजभृतिजुषा लक्ष्मणेनाभिजुष्टां
वन्यावासैः सह हितकरैः कृतरक्षः शिररकैः ।
श्रुत्वा वाचो हृदयविभिदः स्विन्नगात्रोस्म्यभूवं
भ्राम्यद्धात्रीं पदतलगतां भावयन् क्लिन्नचक्षुः ॥३२॥

मायाहिंसा मणिमयस्रजो दानवा ख्यातशौर्याः
जन्ये शौण्डा अविहतरया खेऽवनौ पर्वतेषु ।
सद्यो दूरे द्रुतगतिमता दृश्यमानाः समीपे
नैतैर्योद्धुं प्रियतमशिशू शक्तिभाजो महात्मन् ॥३३॥

दृष्ट्वारण्यावपि नहि शिशू दैत्यशस्त्रप्रहारं
जन्यं कर्णैः श्रुतमिह भवेत् विस्मयः कोऽत्र किं वा।
निम्नोच्चैर्भूशयनमनयो - र्वन्यमूलाशनञ्च
शक्ष्येतेऽम्बे वियुतिमशुभां मर्म हिंस्रां विसोढुम् ॥३४॥

यासौ काम्या भवदभिमता यानमेतत् यदर्थं
रक्षो हिंसा गहनभयदा पूरणीया मयैव।
सैन्यैः स्वीयैर्द्विरदपतिभिर्वाजिवाहैर्रथास्त्रै
र्बालावेतावपटुकरणौ नेतुमिच्छां जहीहि ॥३५॥

शृङ्गारोऽङ्गी नवरसगुरुर्भूष्यते येन काव्यं
तस्याप्याहुः सुकविकृतिनो दम्पतित्वं सुमूलम्।
संसाराब्धिं तरितुमुडुपं मानवैरर्थनीयं
प्रेयान् तेनाऽऽकलितजननीजन्यभावो महीयान् ॥३६॥

वातच्छेद्यस्तृण इव मृदुर्बन्धनं यो हि पित्रो
स्तस्मिन् धूते वियुतिपवनैर्भ्रश्यते देहसन्धिः।
शून्यारण्यं भवति भवनं श्लिष्यते क्लेषराशि-
र्भानू रात्रौ तपति किरणैर्मानवान् हर्षहीनान् ॥३७॥

स्थाने शोकं त्वमनुभवसे बाध्यसे भीतिदुःखैः
जानीषे नो कुशिकतनयं प्राप्तविप्रर्षिभावम्।
धर्म्यैरुग्रैस्तपसि नियतैः कायकृच्छ्रैस्तपोभिस्-
तप्त्वा वर्ष्याण्यशुभजनिताऽपुण्यमूलाऽशुचित्वम् ॥३८॥

दीर्घे सत्रे सुरतमनसो भ्रश्यते यो हि कोपे
नो चेत्तावच्छलभदनुजैः सेवितस्स्यात्तपोऽग्निः ।
मैवं शोचेः कुसुमललितौ पुत्रकौ ग्लापयिष्ये
भास्वान् भासोपचितिमयते म्लायते नो तमोभिः ॥३९॥

भानुश्चन्द्रो वियति वितते राजते रश्मिसंघैः
स्वच्छावापी विकचकमलै सिंहनादैर्वनानि ।
राज्ञो नीत्या प्रकृति हितया नागरा देशसंस्था
आभ्यां तद्वत् वनमतिमहद् राजमानं प्रभावि ॥४०॥

मा त्वं भैषीः सरसि शरदो ह्यतोये निजान्तर्
न त्वं नाहं न तव सुहृदो रक्षितुं स्वान् समर्थाः ।
सर्वेप्येते सुधृतजनुषो मृत्युव्यालेन दष्टाः
रक्ष्यन्ते ते ह्यनिशमशुभाद् रक्षिता येन गर्भे ॥४१॥

तस्माच्छीघ्रं निदिशसहसा सूनुरत्नौवनाय
गन्तुं नातोप्यधिकसमयं यापयेस्त्वं सुराजन् ।
यात्रां काम्यां शुभफलवतीं कर्तुकामः सुगन्धैः
शुभ्रैर्हारैस्तिलकवसनैर्भूषयेथाः कुमारौ ॥४२॥

प्रत्यक्षं मे तपति विदिशो रोचिषा गाधिसूनौ
भूपो भूयो नुदति तस्मिन् याचमाने महर्षौ ।
भीत्या श्लिष्टो नलिननयनौ राघवौ आजुहाव
संसेव्यो वामृषिरनुदिनं शस्त्रविद्याऽधिवक्ता ॥४३॥

यज्ञघ्नानां श्रुतिपथमुषां धर्म्यहिंसारतानां
इच्छुर्नष्टिं जगति जनतां भातुमीप्सुर्महात्मा ।
सूनुर्गाधेरमितजटिलैः केशसंघैरुपेतो
यातोऽरण्यं वृजिनभयदो रामसौमित्रियुक्तः ॥४४॥

राज्यागारान्नदतिसरयू - र्योजनाढ्ये तदर्धे
आचम्यास्यां हृदि कुरुवलां मन्त्रग्रामं सुधार्यं ।
माभूत कालायुतिरतिवलां रामसौमित्रि तात
विद्याभाजोऽभिभवति न तृङ्क्षुद्भयं राक्षसीयम् ॥४५॥

मन्येऽस्निग्धं पथिकतपनात् क्षीणताश्लेषलीनः
तिग्मारश्मीः प्रखरकिरणस्त्यक्तुमिष्टे विसायम् ।
रात्रीकृष्णालपनकमलं ग्लापयेद्या तमोभिः
सूते पापं नहि हितफलं नित्यमेकान्ततस्त्यम् ॥४६॥

राजन्याच्यौ समतलतटे वाति वायौ सुशीते
शिष्यौदोषां घनतरुमये कौशजायां सुवृष्यां ।
वृक्षच्छायासुकृतछदनेस्वादुसस्याऽऽवृतेऽस्मिन्
सुप्त्वा प्रातर्निजतृणकुटी दृश्ययोगं श्रयेम ॥४७॥

श्रीमन् पुत्रौमदनतुलितौ सेवमानौमहर्षिम्
आसाते तौ यजनविहृतिं वारयन्तौ निजास्त्रैः
पूर्णेयज्ञे सुनियतियुते राजधानीमयोध्या-
मायातौ त्वां प्रणतिप्रवणं ह्लादयेतां प्रणामैः।४८॥

तावत्त्वं मे सदनमशुभं पावयन्नास्व सौम्य
चक्षुर्ग्राह्यौ त्वयिकृतवति ज्ञातसारौ भवेताम्।
पूर्णाश्वासे परिणयवचः स्थानमास्ते यशस्वी
नो चेदेवं सुजनमननं नोचितं ते च मे च ॥४९॥

यद्यप्येवं भवति विदितं लोकसंस्थानुकूलम्
आश्वस्तोऽसौ स्वचरसुमुखाद् रूपवीर्ये सुशिश्वोः
काम्ये कान्ते तव परिजने सूर्यवंश्ये सुदान्ते
नो चेद् यातौ नयनविषयं ह्याप्तश्रुत्या गृहीतौ।५०।

योऽसौ कश्चित् पशुपतिधनुर्बाणमौर्वीसुपृक्तं
हस्ते कुर्यादवनितनुजा भूष्यमाणः श्रियेत्।
कानन्धा × जनकाधितनयं × रामचन्द्रं × [illegible]
अन्ये शूराविहतकृतयस्त्रायमाणा गुहाभिः ॥५१॥

साक्षाद्विष्णुः प्रवरगुणभृत् प्राणिधर्मावतीर्णो
सैषो रामोऽवितुमिनजनं वेदपीयूषसिक्तम्।
नेमंवेत्तुं प्रभवतिसमोऽध्यात्मदृष्ट्या विहीनः
सोऽयं नेयो जनकमिथिलां लक्ष्मणेनाभिपन्नः ५२

साक्षाद्भूते गिरिशधनुषि ज्याशराश्लेषलीढे
सिद्धाः साध्याः सुरपतिमुखाः पुष्पवृष्टिं रचेयुः।
धन्यं धन्यं दिनमतिमहद् भाषमाणाः प्रजाः स्युः
हृष्येद्भूमिर्जनकसहिता दुष्टदैत्या विभीयुः ॥५३॥

स्निग्धप्रेमा प्रणयवसना शीलचारित्र्यदघ्ना
पातिव्रत्ये विहितवसतिर्बिम्बभूतासतीनाम् ।
एनो हिनानिगमगमितं पालयन्ती सदाशा
राज्ञी नन्देद् वहु सुनयना दासदासीसहस्त्रैः॥५४॥

अङ्गीकुर्याद् विनयमधुरामर्थ्यमानां तदिच्छां
नन्द्येद् यन्नो सुकुलभवनो सोमसूर्यात् प्रभूतम् ।
शीघ्रं प्रार्थ्यः कुशिकतनुजो रामसौमित्रिमिश्रं
पूर्णे यज्ञे जनकनगरीमाश्रयेद् वै तपस्वी ॥५५॥

योगार्चिभिर्जलजमुकुले पुष्यमाणे त्वदीये
शस्ते शक्तिः किमितिशयिता त्यक्तु मीशीत सूर्यं ।
कान्त्या हीनो हिमकरशशी प्रेतिमानं निशायांम्
आतो नाथस्त्वदनुवचने बद्धभावं मनो मे ॥५६॥

प्रेमालापान् परिणयसृजः शुश्रुवान् सारगर्भान्
ब्रह्मानंदाकलितं हृदयः शान्तस्वान्तो महर्षिम्
शातातापं दशरथनृपं नन्दयन्नध्युवाच
हृद्यैः पुत्रैर्विहितदुरितैर्वर्द्धयेत्त्वां गिरीशः ॥५७॥

गन्तुं मनाश्च सुमना मिथिलां महर्षि-
र्ध्यायन् गतिं भगवतो महनीयकीर्तेः ।
राज्यं विशोधरणिपं जनकं दिदृक्षुः
प्रस्थापितो मुकुलितांजलिरामनाथैः ॥५८॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः ।
नारायणो वदति कौशिकवृत्तमित्थं
वैवाहिकं च मननम् उभयोश्चतुर्थे ॥५६॥



ऊर्मिलीयमहाकाव्ये

## पञ्चमः सर्गः

साकेतभर्तृ महनीयमहाविभूते
रंकाधिरोपितपरेशदयां दधानात् ।
देशाच्छुभान्निरतिगम्य विदेहराज्यं
प्राप्तोमहर्षि विधिवन्नियतो धृताशः ॥१॥

गङ्गापयोविमलभानुसुधासुलिप्तं
गौरीगुरोः शिखरसाम्यभृतं सुदीर्घम् ।
राज्ञो विभासि भवनं भयदं रिपूणां
शोकापहारिविलसद् गतवान् सुशान्तम् ॥२॥

सम्विश्य भूपसदनं गृहमेधिमान्यो
द्वास्थोपचारकमनीयशमैरुपाश्रयम् ।
तेजोविशेषशमिताऽरिभयप्रवाहं
क्षान्तौरतं गुणनिधिं जनकं ददर्श ॥३॥

ज्ञानी वशी मनुजमानसराजहंसः
संसार वृक्षफलितं स्वपरात्मभेदम् ।
अध्यात्मबोधमहसास्थगयनत्रिलोक्याः
राजन् जयेति कथयन् पुरतोध्युवास ॥ ४ ॥

पाद्मश्रियौ निजकरौ शिरसा सुयोज्य
राजा विधाय विनतिं कुशलं चकाङ्क्ष ।
भास्वत्प्रभा तवकृतेरशुभं निहन्ति
क्षेमःकृतो न तव देश जुषां जनानाम् ॥५॥

नुन्नी महर्षिरमलो तपसा सुपूतः
सीतोर्मिलासुवरणीयविवाहयत्नम् ।
साकेतवृत्तमगदन्नुशनैर्विचित्रं
अन्धो यथाऽनुमुदितः सुदृशोः सुलाभे ॥६॥

शैवं धनुर्मम पुरः सगुणं विधुन्वन्
वीराग्रणीर्धराणिजावृतिभूष्यमौलिः ।
मान्यःसंमेस्वतनुजाकरपीडनेन
चाघोषयत् स जनको श्रुतिशास्त्रदर्शी ॥७॥

उद्घोषणा वियति भानुविकाश साम्या
ज्ञाता समैरवनिपैः सहसा धरित्र्याः ।
राजातिथेय-विधिपूर्तिमलं विधातुम्
आदिष्टवान् सचिवमुख्यतमं विधिज्ञम् ॥८॥

संसूचितो नरपतिर्मिथिलाधिपेन
हैमाम्बरावृतरथे धृतवीरशस्त्रः ।
शस्त्रावृतैरुभयतः पुरुषैः सुगुप्तो
द्रष्टुं ययौ दशरथस्तनयौ वियुक्तौ ॥९॥

गाधेः सुतेन तपसा विहितास्त्रविधौ
सम्फुल्लवारिजमुखौ शशिकान्तिभाजौ ।
सद्योवतीर्णभिषजाविवस्वर्ग्यदेहौ
स्निग्धौ सुतौ प्रमुदितौ मिथिलानगर्याम् ॥१०॥

भ्राजिष्णुभाः कुशिकनन्दनयोगिवर्यौ
यात्रां शुभां जनकचापमहोत्सवाय ।
कर्तुं तदासह कुमारदिदृक्षयाऽसौ
हृष्टोन्वमन्यत विधेर्विधिमण्डनाय ॥११॥

तीर्णे व्रते मुनिरनङ्गसमौ कुमारौ
साकं वहन प्रतिपुरं जनकस्य रेजे ।
सूरं विधुं प्रवहृायुरत्नं यथा रखे
प्राप्तत्विषापरिमलैर्लसितं विसायम् ॥१२॥

पञ्चेषुकान्तिगतिकौ कमनीयशीलौ
शुभ्रासितौ चिकुरकेशविलासिभालौ ।
तूणीरचापसितपृष्ठभुजौ किशोरौ
नेत्रश्रिया विजितखञ्जनचारुशोभौ ॥१३॥

साकेतवासिनरपापरकामदेवौ
चान्द्रप्रभाश्रितमुखाब्जमयौ कुमारौ।
यान्तौ पुरी नगरराजपथे जनानां
कम्रे दृशावपिबतां रहिते निमेषैः ।।१४।।

आतिथ्य सौधममलं परितः सुसज्जम्
विद्युत्प्रभाधवलितं महसा सुसेवम्।
सौवर्णभाहततमश् शशिनी विशिष्टं
सेदुस्त्रयो विगतपापमया विशोकाः ।।१५।।

मार्गे सिते शरतिथौ गुरुशुक्रदर्शे
मान्यप्रजासुसमितौ शिवशक्तचापम्।
प्राचीकटन्नरपति - र्जनतासमक्षे
दृष्ट्वाऽद्भुतं विमनसो नरपा अभूवन् ।।[illegible]

केचिद्द्रुता भययुता मुमुहुर्विषण्णाः
म्लानाः परे स्वनियतिं बहु क्रोशमानाः।
नाश्लेषि कोटिरपरा धनुषः शिवस्य
संलक्ष्य चित्रमतुलं जनकश्चिखेद ।।१७।।

आनाश्रिता सफलता तरुणी यदा नो
वीराऽऽमुखं गतवती सविलासहासा।
तावत्परा बिफलताधृतप्रेमवल्ली
यूनोऽङ्कमाशु मुदिता सुदृढं सिषेवे ।।१८।।

सीता भवेत् पतिमती कथमाशु पूता
बन्धः पणस्य कठिनो निहितो मयाऽयम् ।
वीराग्रणीर्गजवलौ यदि नो विषेहे
चापं तदा किमुत रामतनुः सुमृद्वी ॥१९॥

लोकेश विश्वभरणे धृतदिव्यरूप
नग्नः स्वयं सृजति सेवकगोप्यवासः ।
दन्दह्यमानगरलः सुसुखं निपीतः
शक्तं विधेहि भगवन् शिशुकान्तरामम् ॥२०॥

नाथ त्वदीय पदपङ्कजरेणुजुष्टा
भाले धृतां विधिलिपिं न शुभां प्रमार्ज्यं ।
सौवर्णदण्डपटछत्रकिरीटभाजो
नन्देत्तथा धनुरिदं रघुनन्दनेन ॥२१॥

हे नाथ त्वं कुरु दयां मयि दीनबन्धो
सद्यो हरस्व गुरुतां धनुषो यथा तत् ।
बालो मरालतुलितो लघु नीलवर्णः
कुर्याद्वलौ सुगुणितं कुसुमैः सुमाल्यम् ॥२२॥

वैदेहवाङ्मधुरता प्रियता तटिन्यां
स्नाता नृपा सुशमिता ज्वलितौतदानीम् ।
आयोध्यकौ नृपसुतौ सहसा विलक्ष्य
अक्ष्णा न्यदेशिऋषिणा भरताग्रजोऽसौ ॥२३॥

आदिश्यतां विधिकरः सहभाजिदासो
धर्तुं सहे शिखरिणम् किमिदं धनुर्यत् ।
येनावमानसरसीसुमनो निमग्नो
राजां व्रजः प्रथितशौर्यसितांशुधाम्नाम् ॥२४॥

सत्यं ब्रवीषि किमु तात गुरुस्तवायं
सज्ये त्वयाधनुविदारविधिं श्रयेत ।
सीतां ददीत जनको नु कथं परस्मै
भ्रश्यन् गिरो जनमतो महतां समक्षे ॥२५॥

रामस्ततो भवधनुर्निपुणं निरीक्ष्य
पाणौ समादधदलं जलदो यथैन्द्रम् ।
संयुज्यमानमिषुणा सखं विभग्नं
क्षिप्तं भुवं पवनयानमिवालिलिङ्ग ॥२६॥

आलक्ष्य कार्मुकगतिं जनता जहर्ष
कन्येप्सवो नृपतयो विमदा अभूवन् ।
हर्षध्वनिः पटहवंशमृदङ्गजुष्टः
आशान्तरालपदवीं सुभृतां सिषेवे ॥२७॥

शुष्का कृषिर्जलदवारिकृताभिषेका
निस्वोऽश्रमं चितधनो नयनाज्यथान्धः ।
रात्रिं प्रभा जगति भासयते हिमांशोः
भूपस्तथा परिजनैः सहमोदमाप ॥२८॥

संज्ञापितो दशरथो जनकेन सम्यक्
हृष्यन् परं सुविदुषे द्रविणं दिदेश।
चन्द्रो यथा भुवनधेरुदयं तनोति
लक्ष्मी सरस्सुमनसां कुमुदाङ्कलग्ना ॥२६॥

यज्वप्रियो मधुरवाग्हितसम्प्रवक्ता
दाक्षिण्यचुञ्चुरहितो विधिभञ्जकानाम्।
सैन्यैः सुतैः सहमतैर्दशस्यन्दनोराड्
आसेदिवान् स मिथिलां गुरुभिर्विदग्धैः ॥३०॥

सम्मानितो धरणिपोमिथिलानिवासैः
पान्थश्रमं सुशमितं ससुखं विधाय।
मान्यै द्विजैः सगुरुभिः ससुतैः स्वयं हि
वैवाहिकी, समभजद् भुवमाप्तमित्रैः ॥३१॥

उद्वाहसाधनशमीकुशमाल्यदूर्वाः
कस्तूरिकामलयचन्दनगाङ्गमम्भः।
यज्ञोपवीतममलं त्रिगुणं सपुष्पं
कौशेयमंशुलसितं सदशं दुकूलम् ॥३२॥

माङ्गल्यकारि दधिकं मधुपर्कपात्रम्
ब्रह्मासनं सुखकरं विधिवत्परेषाम्।
हैमासनानि बहुशो बहुभूषणानि
रत्नानि भान्ति कलधौतकृतः समुद्रा ॥३३॥

एतैर्भृ ततदपरैर्जनको मनस्वी
रामं समर्च्य भरतानुजमर्चयत्तम् ।
उच्चारिते स्ववरयोः खलुगोत्रनाम्नोः
सीतापरां सदंददे भरताग्रजाय ॥३४॥

कन्या प्रदातृपुरुषान् प्रथमान्परान् स्वं
द्विघ्नादिशो गमयते सुरलोकसौख्यान् ।
एष्यं शुभं सुनयते तपते तदेनो
भौमं यथेच्छममलं सुखमातनोति ॥३५॥

अङ्केधृतां स्वतनयां श्रियमूर्मिलां यः
सव्यं वलि निजकरे सफलं प्रयुज्य ।
सौमित्रये शुभकृति सुदुकूलछन्नां
राजाददात्तनुकटिं त्रिदिवे सुखाय ॥३६॥

चामीशतं हयगजान् रथशस्त्रपूगान्
कुण्डंपयस्सुददतीर्महिषीः शतानि ।
अघ्न्याः सुतैस्तनुभृतां महनीयभावाः
प्रादत् सरलकनकाभरणं परार्द्धम् ॥३७॥

राजा कुशो निजसुते श्रुतिमाण्डवीके
सम्भूष्यतेऽनुभरताय ततोऽनुजाय ।
शत्रुघ्नकाय विदुषे परमार्तिहन्त्रे
सद्यो ददे जनकराजमते निलीनः ॥३८॥

हे उर्मिले! सुखितमा भगिनीसमेता
दीर्घायुषः सुतपतीन् प्रणयैरुपेतान्।
चारित्र्यशौर्यशमदानरतान् नृसिंहान्
वंशोदयं हितकरं दधतो लभस्व ॥३९॥

साकेतभर्तृकुलमात्मकुलंधारित्र्यां
त्रैविष्टपं निगमकल्पतरोः सतीर्थ्यम्।
धर्माध्वनीनमसुखं खलुदुर्जनानां
पत्युर्व्रतं भजसुखं सुरमृत्युलोके ॥४०॥

चारित्र्यचन्द्रकिरणैर्द्युतिमत्सतीत्वं
रक्षत्यदः परिजनं भरते कुटुम्बम्।
एनं विनारमयते न समाजराष्ट्रं
लोकैर्धृताः किमु समावहवोन्यधर्माः ॥४१॥

दाम्पत्यमूलकसुतो विशिनष्टि सर्वं
बाल्ये रतिं वितनुते कलभाषणेन।
तारुण्यभागतुलितां कुलधर्मवृद्धिं
तन्वन् दधाति गुरुतां मुदमात्मपित्रोः ॥४२॥

धर्मे रतिं स्वमनसोविरतिं ह्यधर्मात्
श्वस्रूप्रियापतिपरा मृदुवाग् जुषस्व।
भृत्ये दयां गुरुषु रोषपराङ्मुखी त्वं
पत्युर्विमानकुपिता न विरोधमाश्रयेः ॥४३॥

वाचा हृदा कृतधियो धवहृद्यरक्ता
श्रृङ्गारभावसरसा पतिदैवताङ्काः ।
संसारकर्मनिरता अपि सिद्धिभाजो
दाराः प्लवा भवपयोधितरे समर्थाः ॥४४॥

राज्ञोधनं जनधनान्न परं हि किञ्चिद्
एतेन भव्यमसुना च सुखं प्रसाध्यम् ।
कुर्वन् व्ययं क्षतिफले निपुणं भजेथाः
देहं प्रजार्थभृतिकं जनतन्त्रलीनम् ॥४५॥

प्राणैः समा सुजनता तनुतापरक्ष्या
ध्येया दया सुमनसा विषिताक्ष्माभिः ।
स्निग्धा जनाः सुतसमाः परिपालनीयाः
श्रद्धा श्रुतौ गुरुजने परमात्मदैवे ॥४६॥

दारा यथा सदनकर्मरताः सुशीलाः
प्रावीण्यपाः परिजनं परिपालयन्ते ।
नित्यं नवं प्रतिमुदं परिशीलयन्ते
राज्यस्थिरेतेरभिनवांधुरमाश्रयेयुः ॥४७॥

इच्छेन्मनुष्य उदयं यदि सम्पदानाम्
आयव्ययस्यमननं विशवुद्धिपूर्वम् ।
मूलं यदस्ति नृपतेर्विनिपातरोधि
तस्मात् सदा व्ययहतौ यततामवश्यम् ॥४८॥

वैयक्तिकीं यदि कृतिं विषयेण सक्तां
धत्से हिताय जनतापविसर्गकामा।
राज्यं दृढं वहिरवान्तरभीतिवर्जं
मान्या भवेः सपतिका नयवेदिधुर्यैः॥४९॥

धर्मं त्रयीविहितकर्मभवं निषिद्धैः
कार्यैर्विजन्यमशुभ गदितं विदग्धैः।
जानीहि श्रौतमिह शास्त्रपुराणतर्कै-
राप्तोपदेशचरणैः श्रुतिचुञ्चुवादैः॥५०॥

पत्युर्गृहं ममगृहं पितरौ तदीयौ
पूज्यौ सदर्षितुलितौ कृतभूरिपुण्यौ।
तीक्ष्णं प्रियं धवमतं भगिनीप्रकामं
सर्वं कुरूष्व हृदये हततापलेशा॥५१॥

व्याख्यातृवागुपरता समितौ यदि स्यात्
वैदुष्यख्यातितपनो विदुषां विशीर्णः।
श्वस्र्वाः पुरो व्यवहृतेर्लघुता सुभाजो
वाला भवेयुरथचेद् विफला प्रशिक्षा॥५२॥

अम्बेति भाषणपरो जननीसुलाल्यः
सूनुः प्रियो भवति भातृरसाभिनन्द्यः।
श्वस्रूस्तथा व्यवहृताऽनुदिनं प्रतीक्ष्या
वध्वा भरेन्नमुदिता कुलवृद्धिकेच्छुः॥५३॥

दिङ्मात्रमेतदुदितं सुधिये भवत्यै
देशी समाजसमयौ पुरुषान् विचित्रान्।
आलोचकान् गुणवतो विदुषी निभाल्य
आप्तोपदेशकुलधर्मरताऽऽचरस्व ॥५४॥

पूज्या पतिव्रतपराभिरपांसुलाभिः
मान्या भवेस्त्वमिह लोकहितानुरक्तैः।
पूता दिशो दश यया जननीधवस्य
वंशाभिधे यशसे वितर्ति दधीथाः ॥५५॥

प्रशिक्ष्य एवं तनयां मनस्वी
वियोगजातं गहनं निरुध्य।
हृदा सुदध्यौ जगदम्बिकां स
सुखं विना नो जननीं लभेत ॥५६॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः
नारायणोऽचकथदौर्मिलकाव्यसर्गे
पञ्चाभिधे परिणयं रघुनन्दनानाम् ॥५७॥



## ऊर्मिलीयमहाकाव्ये

### षष्ठः सर्गः

प्रणम्यपाद्यौ चरणौ पितुः सा
चक्षुष्यकान्तिगृंहदेवतेव ।
समर्चनालब्धमहाप्रसादा
विहाय सामीप्यमगाज्जनन्याः ॥ १ ॥

निवेश्य माता तनयां निजाङ्के
शिरः समाघ्राय वचः समूचे ।
सुपुत्रि साकेतपुरं प्रयासि
वधान धैर्यं हृदये पवित्रे ॥ २ ॥

तुषारपूर्णैर्जलजैः सुनेत्रे
पयोभिरच्छैर्नयनाद् प्रसूतैः ।
समे दधानां चकितां भयेन
मृगीं सुमुग्धां भवतीं नु मन्ये ॥ ३ ॥

अधीरताश्लेषपदं न यायाः
समाहृता लक्ष्यवियोजयत्री।
समाजसम्मानहृतिं परस्य
सुखोदयं राज्यर्ताति प्रसूते॥ ४॥

परोक्तितैक्ष्ण्यं मृदुतां सहस्व
वचः स्वाकीयं मधुरं प्रयुङ्क्ष्व।
क्षतस्तरू रोहतिशस्त्रसंघै-
र्वचो हृतं नो पुनरेति सन्धिम्॥ ५॥

दिशाभिरीड्यः श्रुतिसम्बगक्ता
शतेन गर्यो जनकस्ततस्तैः।
सहस्रसंख्यैर्जननीसमीड्या
तयाऽपि पूज्यस्तनया ग्रहीता॥ ६॥

पिताजनन्यौ प्रभवौ च तस्य
उपासनीयौ गलिना स्वायं ते।
समाहृतौ तौ सुखतस्सुवृत्तौ
निदेशपूर्तौ सततं यतस्व॥ ७॥

सुभृत्यसम्पत्तियुजीर्न योगं
तयोर्भूतेश्चेद् विनतिं प्रकुर्याः।
दिवानिशोस्सन्धिमुपेत्यशश्वात्
परेशप्रीतेरमिताथंदात्रीम्॥ ८॥

विपश्चितो मानधनस्य पत्यु-
दंयापरस्याऽशुभभूतिहन्तुः ।
वदान्यमूर्धन्यमहौजसोस्य
प्रियस्य बन्धोस्सुमुदस्तनुष्व ॥ ९ ॥

अमुत्रलोके भुविसम्प्रहर्षं
तनोति कीर्तिं विशदां सुमान्यां ।
श्रिणाति पापान् ददते स मुक्ति
दुःखत्रयाद्वाङ्मनसात्मदेहैः ॥१०॥

भजस्व देवं तमपूर्वनाथं
गृहेरता स्या विदिता भवेऽस्मिन् ।
सतीत्वतेजो बलमस्ति चित्र-
मर्हर्निशं ध्यानरतैरलभ्यम् ॥११॥

वशे विधातुं न पति यतस्व
स्वयं वशे तस्य भवेः सतीत्वम् ।
स्वतन्त्रता दोषकरी वधूनां
कुमारता यौवनवार्द्धकेषु ॥ १२ ॥

श्रुतिस्मृतिग्रामधृतैर्वचोभिः
प्रमेयमेतन्न च शुष्कतर्कैः ।
पुराणदृष्टान्तबलेन साध्यं
सनातनाचाररताभिनन्द्यम् ॥ १३ ॥

पुरातनीवृत्तिरियं न गण्या
मनस्विनी मानविघातसङ्कुला ।
मनीषिणीधीप्रभुतावमन्त्री
गृह्णन्ति स्वैराः कुलटा विदग्धाः ॥१४॥

न केवलं संग्रहशालितास्याद्
अनाथदीनातिथियाचकेषु ।
गुरुप्रदेयार्ऽर्थिहिरण्यकेषु
द्विजेषु देयं धनमात्मधर्म्यम् ॥१५॥

महाकवीनामुपदेशकाव्यै—
स्तथा प्रबन्धैर्विदुषां सुरम्यैः ।
त्रयीस्मृतीनां वचनैर्न शिक्षा
यथा चरित्रैः सुसतीप्रशान्तैः ॥१६॥

जनाः कुमारास्तनयाः स्वकीया
बुधा बुधाःस्तन्यधयाः स्वतन्त्रा ।
स्वभाववृत्तं जनकालमात्रो
रसत्सदाधार विना श्रमेण ॥१७॥

गतिस्सुधीरा पदयोस्सतीनां
वचो हितं हारि सुधाप्रसारि ।
प्रिये दृशौ स्वान्तमनिन्दितं स्वं
पतिं सदाध्यायति लोकयेते ॥१८॥

विलासिताऽसंयमनिन्दनानि
विभेदहिंसाकलहान् सुपुत्रि ।
परत्र पत्युः सदने निवासं
त्यजेत्कुलीना द्विषतः सुलक्ष्म्याः ॥२४॥

ननान्दृमातृश्श्वसुरं सुयातॄः
कनिष्ठज्येष्ठौस्वधवस्यदेवॄन् ।
पतिं सुतं स्वभगिनीः सुताञ्च
समं नयेः भोज्यमनुक्रमं स्वान् ॥२५॥

ततो - वशेषान्न - पयोभिराज्यैः
फलै - रसै - र्व्यञ्जन - लेह्य - पेयैः ।
हुतावशेषोपमितैः सुपुण्यैः
रक्षेश् शरीरं कुलधर्मसेतुम् ॥२६॥

विवाहसंख्यावसुभिर्मितास्तै—
र्विधिज्ञमान्यैर्गदिता विधिज्ञैः ।
स्मृतौ हितो ब्राह्मविधिः प्रशस्यः
स चास्ति वंशद्वयमानि जुष्यः ॥२७॥

दिवं प्रयातस्य पितुर्धनस्य
शिशोश्शुचित्वे ग्रहणाधिकारे ।
भवस्य विश्वस्य सुखं सुलिप्सो—
र्निमित्तमेषोऽत्र जनौघभाजः ॥२८॥

कुलोद्भवा गोत्रधराः सुवत्सा
जनैर्दिनादेव दृढं प्रशिक्ष्याः ।
अबोधग्रस्ताः कथमभ्यसेयुः
निरञ्जनत्वाद् विदिते समर्थाः ॥२६॥

रसैस्समाभिस्समितो वयस्वान्
सुतोऽनुकर्ता चरितं स्वपित्रोः ।
स वेत्ति भाषां व्यवहारमूलां
नवे धृतं नाश्नति नाश्यभूयम् ॥३०॥

सुताः सुशिक्ष्या सततं यथा ते
स्वदेशसामान्य - समाज - सेवा ।
मनीषया सत्त्वगुणैः स्वधर्मै—
रतन्द्रिता नीतियुजो यजेयुः ॥३१॥

फलं भविष्यन् सुहितं नवेति
विवेक - सम्पत्तिचितं सुतर्कैः ।
समीक्ष्य पूर्वं विधिवद् विपश्चिता
क्रियेत सम्यङ् न तु बुद्धिवर्जम् ॥३२॥

अनर्थमूलं विपदां प्रकर्तृ
दुष्कीर्तिमित्रं बहु दुःखकारि ।
सम्पत्तिहानि तनुतेऽवमानम्
अधैर्यमेतन्न हृदा ध्रियेत ॥३३॥

पत्युर्गृहे चेद् भविता प्रसङ्गः
कुलं किमास्ते गुणवत् सुधन्यम् ।
बलोदयौदार्य - नयप्रयोगैः
प्रशंसनीयं सुकलं धवस्य ॥३४॥

प्रबोध्य एवं शतशस्तदम्बा
सम्भूष्य क्षौमैर्बहुमूल्यवस्त्रैः ।
प्रसङ्गभूषाञ्चित सौम्यकान्ति
शुभै - र्वचोभि - स्स्नपयाञ्चकार ॥३५॥

पराश्च तिस्रस्तनयाः सुरूपाः
सम्पूर्णचन्द्रांशुसिताः शुभाङ्गीः ।
सम्भूष्य रत्नै - र्धृतिकान्तिकान्ताः
दिनेशभासैरुपसेविताङ्घ्रीः ॥ ३६ ॥

सुकेतुसौवर्णसुकिङ्किणीशैः
सुगन्धमुक्तामयमाल्यहासैः ।
अनेकवर्णोक्तदुकूलचित्रैः
परिष्कृतेष्वन्तनिलीनभासैः ॥ ३७ ॥

निपीतवाताऽऽतपशीतकेषु
पथिप्रघातार्तिलिहोदरेषु ।
जले स्थले भू-विवरेषु खेषु
क्षुधातृषात्रासविवर्जितेषु ॥ ३८ ॥

रथेषु संरोप्य कुमारिकास्ताः
सुसेवितास्तूर्मिलया समेताः ।
शतैस्सुभृत्यैः परिचारिकाभिः
व्यसर्जयन्मङ्गलवाद्यशब्दैः ॥ ३९ ॥

पुरोहिताचार्यद्विजैरमात्यैः
स्वनामधन्यैर्धनिकैर्धुरीणैः ।
यशोभिरभ्यैर्विदुषामधीशै-
र्बलाधिनाथैर्जनकस्सबन्धुः ॥ ४० ॥

पुरीमयोध्यां प्रति राजधानीं
प्रयातुकामं स्वसुतैर्वधूभिः ।
नृपं प्रयाणार्हविधिं विचिन्वन्
शुभाऽऽशिषाऽऽयोज्य सहान्वगच्छत् ॥ ४१ ॥

प्रणम्य वैदेहजने प्रयाते
चतुस्समुद्रैस्सह निम्नगाभिः ।
अपां प्रभुर्वाऽवधराडजेयः
सुतैर्वधूभिस्सह मोदमाप ॥ ४२ ॥

ततो दधानं परशुं सुतीक्ष्णम्
तडित्सु - धाराशुचिबाहुजान्वयम् ।
भृगोरपत्यं विततं त्रिलोक्यां
परात्मवर्चो - हृतकिल्विषादिम् ॥ ४४ ॥

विलोक्य देवं तमपूर्वकान्तं
द्विजाङ्कदोर्जाङ्कनिलीनगात्रम् ।
निरस्तधैर्याद् धृतकम्पनोसौ
सुयोज्य हस्तौ चरणावनंस्त ॥ ४५ ॥

त्वयाऽनुशिष्यस्ससुतो महर्षे
कथन्नु सेव्यो रमणीयभावैः ।
विधाय्य भङ्गं धनुषो हरस्य
ब्रवीषि वाक्यं मृदु सान्त्वयन् माम् ॥ ४६ ॥

पदप्रहारैर्नमयन् धरित्रीं
क्रुधा सुरक्ते नयने सशक्तौ ।
बली सुचाल्योग्रतरं बभाषे
न वेत्सि मां क्षात्रयमं धरायाम् ॥ ४७ ॥

अवोचदेवं क्षुभितोऽवमानात्
स लक्ष्मणो मानधनाग्रयायी ।
धनुर्विभिन्नं स्वयमेव जीर्णं
सुयोज्यमानं न गुणेन दोषः ॥ ४८ ॥

लिहन्तमोष्ठौ दशनैः स्वजिह्वां
नयन्तमक्ष्णोर्भ्रुकुटीष्वसाम्यम् ।
सुलक्षयन्तं हरिणं मृगेन्द्रं
प्रदृश्य राजा भृशमन्वतप्त ॥ ४९ ॥

वधूर्मिला भीतिभरेण धूता
निदाघतप्ता हरिणीव व्यग्रा ।
महर्षिकोपस्य शमं चिकीर्षुः
ववन्द देवान् मनसा सती सा ॥ ५० ॥

ननद् विपञ्चीं कमले वसन्तीं
त्रयीमयीं त्रासहरासु राज्ञीम् ।
धृताक्षमालां तिमिरं हरन्तीं
नतोस्मि देवीं वचसां परां ताम् ॥ ५१ ॥

गुरोर्धिया लूनमहत्त्वयोगा
ग्रहावली वै श्रयते महिम्ने ।
यदक्षमालां स्फटिकैः पिनद्धां
नमामि भूत्यै सुवचोधिदेवीम् ॥५२॥

खगो यदङ्घ्रे रजसा सुधीशो
गुरोः कवेर्यत्र न बुद्धियोगः ।
जलात्पृथक्त्वं पयसः करोति
नमामि वीणाश्रुतिमालिनीं ताम् ॥५३॥

मरालपद्मागमग्रन्थधात्रीं
रणाद्विपञ्चीं स्फटिकाक्षमालाम्।
सरस्वतीं बोधमयीं निकामां
नमामि देवीं महते शिवाय ॥५४॥

पिता न स्याद् वै जननी न सा स्याद्
प्रजा न ताः स्युः सुहृदो न ते स्युः।
जडं घनं स्यान्निपरपेक्षमेव
कृपा त्वमम्बा यदि नो विदध्याः ॥५५॥

ददाति लक्ष्मीं विनये नियुङ्क्ते
तनोति कीर्तिं मनसः प्रसादम्।
अरेरभावानुदयं प्रजानां
करोति किन्नु भवती प्रसन्ना ॥५६॥

महर्षिणा तेन ततोन्वभावि
भुवो भरिष्यन् त्रिदिवात्स विष्णुः।
अहीशसौमित्रिमहाविभूतिः
अवातरत्साधुस्मृति भरिष्यन् ॥५७॥

त्रयीवितानं शुभधातुकेभ्यो
अनाथसाधून्नवितुं नृभुग्भ्यः।
धृतं यदास्त्रं बलिना स्वकेन
न धार्यमेतच्छद्मिना जनेन ॥५८॥

विसृज्य चापं स्वविर्ति स्वकीयं
वचो हितं हारि सुधर्मपृक्तम्।
उवाच रामो भरताग्रजं नु
शिष्टं यदास्ते क्रियतां सुधर्म्यम् ॥५६॥

तपोर्जितुं राम गिरिं निवत्स्ये
मनः प्रशान्तं भविता न तप्तम्।
धनं यदास्ते शमिनां सुसेवं
परात्मसाक्षाच्च कृतौ प्रवीणम् ॥६०॥

गते ऋषौ फुल्लजनो मनस्वी
वधूसुतैः सैन्यसुभृत्यसेव्यैः।
निरस्तदैन्यो धरणीशमान्यो
नवं भवं भावितवान् समेषाम् ॥६१॥

स्वयं परैस्तत्रसहान्वितो यः
प्रबाधनान्मुक्तिपथं प्रपन्नः।
मुदास्रबिन्दून् नयने सृजन्ती
दधत् स देवान् स्तुतिभिः सिषेवे ॥६२॥

गणेशसेवाव्रतिनां शुभाभिर्
द्रवन्ति विघ्नाः शरणम् पयोधिम्।
ततो नु सिद्धिं महतीं महर्द्धिं
भजन्ति लक्ष्मीं विशदां सुविद्याम् ॥६३॥

स्तवांकुरै र्भक्तमनोभिरामैः
हर्षं दधानां कमलोपविष्टाम् ।
अभिष्टसिद्ध्यै च सपर्यमाणां
नमामि लक्ष्मीं सुपयोधिजाताम् ॥६४॥

गर्गे कुले श्रुतिविहित्रिमधर्म - सेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः ।
नारायणो वदति भार्गववृत्तमिश्रं
प्रस्थानकं दशरथस्य पुराय षष्ठे ॥६५॥



## ऊर्मिलीयमहाकाव्ये

### सप्तमः सर्गः

साकेतप्रभुभासिसैन्यतटिनीगङ्गेव यान्ती जवाद्
अन्वग्राजवधूसुतानुगसुहृत्सम्बन्धिनो भास्वतः ।
राजानं नु भगीरथं स्मरयते भासा तपो जन्मना
सेयं याति पुरीं स्म मोदबहुला साकेतमाशाश्रुता ॥ १ ॥

राजन्ते कृतसेचनाः पुरि धृता मार्गाः सुगन्धैर्भृताः
पुष्पैः केतुसुमालिकाभिरखिलैरामोद्यमानाः शुभैः ।
नान्द्यन्ते पटहामृदङ्गपणवा वीणा मनोहारिणी
गायन्ते पथि गायनाः प्रतिपदं गीतानि वेश्याङ्गनाः ॥ २ ॥

स्त्रीवेशाः पुरुषाः कलासु कुशला नृत्यन्ति गायन्ति ते
रामं दाशरथिं सलक्ष्मणमथो शत्रुघ्ननव्याम्बुजौ ।
शब्दै र्जापयते हितैषि जनता देशोदयाऽऽकाङ्क्षिणी
रोहन्ते ललनाः प्रसादशिखरं द्रष्टुं विशिष्टा वधूः ॥ ३ ॥

माङ्गल्यैस्तनयाः शुभेच्छुकमना दिव्याम्बरोद्भासुराः
हर्म्याग्रे स्थितिमाचरन्ति सहसा क्रीडाविरक्ता नवाः।
तन्वङ्ग्यो नयनैर्निमेषरहितैः पश्यन्ति नन्दन्ति ताः
एधन्तां सवधूवरास्त्रिभुवने लाजान् किरन्त्याकुलाः ॥ ४ ॥

सद्वाचस्तपसानिपीततमसो वैदुष्यभाजो नवाः
विप्राः शान्तिकृतौ रतास्तुनुभृतां वार्या महत्त्वं गता।
आयुष्यं ददतो मनून् स्वरयुतानुच्चारयन्ते मुदा
सौभाग्यं कुशलं सुकर्तुमनसो भार्या पुरन्ध्र्यस्तदा ॥ ५ ॥

लोकानन्दनतत्परान् मतिमतस्सन्त्यक्तकौमारकान्
राजाभूद्दृहर्षितो भृशं स्वतनयान् पत्नीसहायान् गृहे।
श्वश्र्वो नाथवतीः स्नुषा पतिमती दृष्ट्वा मुहु र्हर्षिताः
वध्वस्ताः सुहिताः प्रकाम्यनयनात् प्राप्तव्यपारं गताः ॥ ६ ॥

वर्षैः सूर्यमितैः सगर्भ्यशिशुकैरन्योन्यमाक्रीडताम्
पुत्राणां मधुरैः सुधोपमवचो वृत्तैस्सदा सेवितः।
कालोऽयम् सुमहान् लवेन तुलितो यातः समेषां स्मृतौ
रामं राजपदे नियोक्तुमनसा राजाह्वयन् मन्त्रिणः ॥ ७ ॥

राजन् राजधुरं नयन् जनमनस्तापै विहीनं कृतं
एतावत्तव शासनं भुवि महल्लब्धप्रतिष्ठं त्वया।
रामं राज्यपदे नियुज्य सुदृढं लभ्येत प्रीतिर्जनैर्
आयातैः सचिवैस्तदा नृपमतं मान्यं सुतर्कैर्धृतम् ॥ ८ ॥

गात्रं ते जरसा वलीधृतमथोत्साहश्रयिस्फूर्तिमत्
कार्ये व्यापृतिमातनोति सततं श्रान्ति न धत्ते तनुं।
लोको विस्मयते तथापि भवते साहाय्यमाकांक्षते
रामे स्याद् भवतेधिकं सुखितमं राज्यं सुरैः प्रार्थितम् ॥ ९ ॥

आनीतस्स वशी गुरु दिनकृतो वंशस्य पूज्यो महान्
श्रुत्वा वृत्तमदोधहारि शमकृत् स्वस्तिप्रदं कामदम्।
संहृष्टः शुभलग्नमीड्यमदिशद् रामाऽभिषेकं प्रति
तेनाऽभून्मुदितं सभाजनकुलं सस्यं तथा वर्षणात् ॥ १० ॥

आदिष्टैस्सचिवैः क्रियासु कुशलैस्सम्भार्यमाणानि तैः
दृष्ट्वा केकयजा प्रिया दशरथं याञ्चा जले स्नापिता।
तेनासौ परिपूतस्वान्तकरणे रामं वनं प्रापितः
भग्नो यज्ञविधिर्मुमोह जनता राजस्त्रियश्चुक्रुशुः ॥ ११ ॥

सीता दीर्घवियोगभीतिवशगा याता परं म्लानतां
या नो पूर्वमितोऽवदत् पतिपरा सुस्पष्टभावं पुरा।
सा ब्रूते हृदयेश्वरं प्रति पुरो नेया त्वयाऽहं विभो
साकं स्वेन वनं गृहं न तु गृहे स्थातुं सहे त्वद् विना॥ १२ ॥

सीते त्वां नयतो वनं मम पुरः काठिन्यमास्ते ध्रुवम्
आस्से त्वं मृदुले नवे सुखकरे पर्यङ्कजुष्टास्तरे।
भुङ्क्षे कर्मकरी-प्रदत्तमदनं नानाविधं मांसलम्
प्राण्याः सा कथमेव वन्यसुफलैश्शाकैः स्वयं साधितैः ॥ १३ ॥

नाथाग्रभवतश्चरामि विपिने निर्व्याकुला दुर्गमे
पानीयं सरसं भवेत्तवयुजः शाकं जले पाचितम्।
यच्चान्यच्छ्रमसाध्यवस्तुभविता सर्वं करिष्ये हृदा
भूशय्या वसनं वनस्पतिभवं धास्ये प्रियं वल्कलम्॥ १४॥

एवञ्चेद् गमने वनं प्रति रुचिं धत्से मनोयोगिनीं
काम्यं जाङ्गलदेश वासरमणं भीतिं पिशाचाद् रहो।
मैत्रीं पक्षिगणैः शृगालकरिभिर्नादै र्महासत्त्वतां
दद्या गा द्विजमुख्यब्रह्मविदुषे यात्रा शुभार्था भवेत्॥ १५॥

सौमित्रे हृदयेऽवधानदृढतां सेवस्व तातं नृपम्
साहाय्यं कुरु शासनेऽनुभरतं वर्तस्व सौजन्यतः।
दुर्नीते विनिवर्तनं जनमनो राजानुकूलं नय
मातृः स्वा विकला वियोगमृदिता हृष्टा विधेहि स्वयम्॥ १६॥

शश्वास्ते रसदर्शने श्रुतिनये काव्ये कलायां बुधः
पादाब्जे निवसन्नहं प्रतिदिनं यातो वरां दक्षताम्।
कार्पण्यं नहि भीरुतां समभजं सत्सङ्गतेः श्रीमताम्
वैरस्यं मनसोऽतुदं सहचरन्नार्येण संलालितः॥ १७॥

जायन्ते मकरा जलेषु ननु ते वृद्धिं भजन्तेऽतुलां
योगाऽभावयुता मिथो विनशनं श्लिष्यन्ति नो जीवनम्।
शीतांशुः कुमुदं करोति विकचं तन्मार्गमालोकयन्
सोप्यस्मिन् प्रगते प्रयाति विलयं धत्ते न शुभ्रां स्थितिम्॥ १८॥

निर्दिष्टे सुजनै विदग्धगरिमाभूषाचरणैर्मानवैर्
विद्वन्मानसनिन्द्यनीतिचरितैरासेविते सर्वदा।
किं कुर्यां विरहे वसन् सुभवने राज्ञो नयानाश्रिते
सम्पर्कः सुलभोभवेन्न भवतो जीवेम दासाः कथम् ॥ १९ ॥

वंशे भास्करनिर्मितेऽत्र कृतिभिर्ज्येष्ठोभिषिक्तः पुरा
तस्मिन् योग्यतयार्ऽचिते भवति किं हेतुः स निर्वास्यतां।
कैकेय्याः प्रियकारणाद् यदि पुन र्नौचित्यमास्थाप्यते
क्षिप्रं हन्तुमिमां त्वमाशु सहसा दासं जनं प्रेरय ॥ २० ॥

वृत्तं लक्ष्मण तेऽत्रशास्त्रविदिवंधर्म्यैं जनैरर्चितं
वो भूयादनुमोदितं यदि मतैराप्तैर्महाभूतिभिः।
नास्त्येवं विरमेः नृशंसकरणात् सौजन्यमासादयेः
स्वार्थे व्यावृतमानसा न जननी स्वप्नेऽपि हिंस्या भवेत् ॥ २१ ॥

माता मूर्तिमती पिता सुरतनुस्साक्षात् सुसेव्यौ धिया
एतौ पुत्रशरीरपोषणकृते तापं सहेते तु यम्।
नो तस्याः प्रतियातनं सुमनुजाः कर्तुं सहन्तेऽसुभिः
एवं तात कुभावनां हृदयतो दूरी कुरुष्वाशु ताम् ॥ २२ ॥

मादृग् जन्तुरिदं सुदीर्घतपसा यातो महाऽनृण्यकं
त्वञ्चे दिच्छसि मातुलाश्रमगतं सम्पृच्छ्य बन्धुं प्रियम्।
कैकेय्याः सुतमात्मनीनमनयाद्दूरे वसन्तं बुधम्
गन्तुं वन्यनिवासपीडनपरं कृच्छ्रं वनं गाह्यताम् ॥ २३ ॥

लोको मां सुतरां निदेशविरतं भोगोत्सुकं कल्पयेत्
स्वल्पं नो जननी विभीत हृदये पापः मनः संविशेत् ।
तावद्वृत्य वनं प्रवेष्टुमनसं जानीहि सेवारतम्
यावत् खे दिनकृत् करोति विमला आशामयूखैर्निजैः ॥ २४ ॥

मातस्ते चरणौ नमामि कमले नम्रेण मूर्ध्ना ह्यहम्
तातेनाद्यवनं प्रविश्य भरतो राज्येऽभिषिक्तोऽधुना ।
वर्षाणां नवपञ्चकं सुविपिने स्थित्वा :तदन्ते पुनर्
लोकिष्ये पदपङ्कज नृपगृहे दीर्घायुषा वर्द्धयेः ॥ २५ ॥

चिन्तन्ती विवरं परं न सुत ते पश्यामि लक्ष्मीहरम्
राज्याद्भ्रष्टमहं सुलक्ष्यविकलं चन्द्रं यथा कल्पये ।
प्राग्जन्माञ्चितकल्मषै र्मम कृतैरेवं हि प्राप्तं त्वयि
देवै र्हिंस्रक-राक्षसान् शमयितुं राज्ञा नृपो भ्रंशितः ॥ २६ ॥

राज्यं चेद् भरताय दत्तमधुना किं राम ते यात्रया
ग्रामा मे बहुशोर्पितानु जनकै र्भोगाय यावद् भवम् ।
ते नेयं भवतापि जन्मसकलं दासानुदासैः सह
नो चिन्ता प्रभवेत् कदापि शमलं हन्तुं विभर्तुं कुलम् ॥ २७ ॥

मातः सैषसुतः सुधी मृदुवचाः पैत्र्यं वचोऽनूहते
श्रेष्ठो मध्यममानकस्तु कथनाद् हार्दं समुत्कल्पते ।
नीचोऽसौ कथितोऽपि नानुकुरुते लोकैः सनिन्द्यो महान्
नाहं तत्पदवीमिहात्मसुखदां मन्ये दयालो सुतः ॥ २८ ॥

ताताज्ञा वहसे प्रियां सुखकरां कष्टप्रदां वाऽहितां
युक्तञ्चेत् कुसुमैः समां तनुतरां ग्लानीकृतां भूयसा।
कैकेय्याऽनुपदं हतां सुवचनैः किं मां न हन्तुं यतेः
निर्देशान्मम याहि नो वनमिति स्पष्टं समाजिज्ञपत् ॥ २९ ॥

स्वातन्त्र्यं तव नास्ति शासनविधौ राजानुदेशात्परं
गच्छाम्यद्य वनं विधानवशगो वाच्यो न राजा त्वया।
को जन्तुर्भुवि लब्धजन्मलसिताद् भोगाद्बहिष्कार्यते
तस्मात्त्वं सहताद् विधेयमखिलं धातुश्चिरं चेष्टितम् ॥ ३० ॥

निर्बन्धं सुदृढं रमापतिमसौ विज्ञाय यातोम्बिकाम्
सौमित्रिर्विनतां प्रणम्य शिरसा प्राचीकटद्वर्तनम्।
शृण्वन्ती विकलीभवत् तनुदती कम्पैः समालिङ्गिता
केत्वग्रं पवनाञ्चितं न भजते दार्ढ्यं यथा भासुरम् ॥ ३१ ॥

याता किन्तु मिलन्ति मातृ वरदे धैर्यं रतिं धारय
वन्यं नागरराब्दिकं निवसनं कृत्वा निवर्त्स्ये ततः।
मद्रक्षां प्रति चिन्तनं न खलु ते कार्या भयाद्विह्वले
विश्वत्राण विषक्तबन्धुनिहताऽरिष्टस्य सूनो मम ॥ ३२ ॥

पुत्र! त्वद्द्युतिहीनतारणिभवो वह्निर्दहेन् मां व्यसुं
राज्यंभौतिकभोगदं सुखकरं प्राणिप्रियं शान्तिदम्।
प्रेमाभर्तृकृतस्वमातृजनितो देशोद्भवो देहजः
त्रातुं नो प्रभवेत्तनुं बहुगुणस्सामर्थ्यहीनोऽधमाम् ॥ ३३ ॥

उद्देश्यो भवतो वनस्य गमने कोस्तीति सञ्चिन्तय
राज्ञोऽभीप्सितिमञ्चते नु जगतः सम्मोदनं लक्ष्यते।
आदेशस्य विरोधकृच्छिरसि ते लग्नं भवेद् धातुक
स्वातन्त्र्यं न हिताय शासनविधौ सक्तो भवेः सर्वदा ॥३४॥

आज्ञप्तां न वनाय भूपजनकेनाहं वनं यामि वा
लोकैरर्थितमाप्तभावलसितै - र्हिंसैर्महद्भासुरम्।
मात्राथोऽनुदितोऽपरैर्जनभरैः प्रेम्णा समालिङ्गितः
भ्रातुर्बन्धुवरस्य ताततुलितस्याऽऽर्यप्रियस्याङ्गिनः ॥३५॥

मातस्त्वं न विभीहि शासनविधेर्दुर्नीतिभिन्नात्स्वयम्
भ्राता मां निरवारयद् विहननान्मातुर्नवायाः ध्रुवम्।
सर्वानर्थकृतेन्यथाशुभयुजां नष्टोत्सवं नाभवत्
राज्यं लोकसभाजितं निजकुलं नित्योत्सवैर्राजितम् ॥३६॥

पुण्यं स्यात्परिरक्षणात् स्वविषये वास्तव्यकानां मुदा
तेनास्मिन् भुवने गृहं विभवयुद्धन्यं यशस्यं स्वकम्।
कीर्तिर्द्यामधिरोहते प्रणयिनी देवैर्भृशं प्रार्थिता
स्वर्ग्यं सौख्यमलं सुलभ्य तनुते राजश्रियं स्थेयसीम् ॥३७॥

को लाभो भरताग्रजस्य विपिने साकं भवेद् वा त्वया
आनन्दो रघुनन्दनस्य भविता सञ्चार्यमाणेन चेत्।
नैवं तेप्युचितं सुखाय करणं व्यक्तेरभिन्नस्य यत्
आत्मार्थं सकलं त्यजेदिह नयो मान्यो विदग्धैः समैः ॥३८॥

साकेते निवसन् स्वराज्यभवने मां कोशलां मातरम्
आनन्दैर्वियुतैः सुदुर्लभतरैर्नीराभिलाषैः कृशाम् ।
वृद्धां गामिव दुःखिनीं तनुतरां पद्मानना॑त् पोषय
धेयान्नो वचसो भवान् यदि वयं जग्धा मृगेन्द्रैर्भुवि ॥३९॥

उक्त्वैवं मृदुभाषिणी शशिमुखी माता सुमित्रा सती
क्लिन्नाऽस्रैः पतिता पदोः सुनयना गाढं समाश्लिष्यत ।
सुस्पष्टं रुदती सशब्दमसुभिर्मुक्ताऽभवन्मूर्च्छिता
हा मातः प्रणयैर्ममोपरिभवैः क्लान्तासि चिन्तातुरा ॥४०॥

संसिञ्च्याशु मुखे सुशीतलजलैश्चन्द्रांशुतुल्यैर्हिमैः
भाले चन्दनलेपनैर्बहुविधैर्गन्धैर्विचित्रैः शुभैः ॥
नासायाः परितर्पणात् व्यजनजैर्वातैर्मुहुः प्रेरणात्
संज्ञार्थं पारिवेधनादपि यदा तन्वी न मूर्च्छां जहौ ॥४१॥

नेत्रास्रैर्मुखमण्डलं कमलवन् नीहार तुल्यैश्चितम्
हा हा शब्दसमाकुलं परिदधद् यातो भृशं म्लानताम् ।
कार्यं तत्समयोचितं विगणयन्नीशं हृदाऽन्वस्मरत्
सौमित्रिर्जननीं विलक्ष्य हृषितां प्रीतोऽभवत्सान्त्वयन् ॥४२॥

गाधेरात्मजशिक्षितो ह्यतिबलाविद्यासु पारङ्गतः
यो रामो रसहायनो बलवतो रक्षोगणान् हिंसितः ।
येन ध्वस्तमनोरथा विमनसः सीताध्वरे भूमिपाः
मध्ये भग्नमदो धनुर्यदि परं रामस्ततो मानवः ॥४३॥

गुप्तोऽहं विपिने पितेव सततं भ्रात्रा चरिष्यामि शम्
शोकं मा व्रज जङ्गलेऽपि गृहवद् रंस्ये फलैर्जाङ्गलैः।
कामो मां परिबाधते वनरुचो द्रष्टुं गिरीणां श्रियाम्
आज्ञां देहि सहर्षमम्ब पुरतो भीतिर्न कार्या त्वया ॥४४॥

सौम्यं तेजो मिहिरशतजं यत् स्वकान्त्या निचीतम्
वीणापाणिं श्रुतिरवपरां शारदां ज्ञानराशिम्।
श्वेतं वस्त्रं कमलवसनं चारुचन्द्रांशुतुल्यम्
रौद्रीं मालां निजवलिमुखे धारयन्तीं नमामि ॥४५॥

पाद्यैर्माल्यैः स्फटिकमणिभिः पुस्तकी मालिकाभिः
वीणावाद्यैः श्रुतिसुखकरैः सामगानैर्विचित्रैः।
शुभ्रैर्वस्त्रैः कमलनयनैर्वेदविद्या प्रचारैः
जुष्टां वाचं करुणहृदयां भक्तिभावैर्नमामि ॥ ४६ ॥

रामाः सर्वाः प्रकृतिमधुरा अंशजातास्तवैव
प्रेमा आसां मधुरमहिमा विष्णुभूतोऽनवद्यः।
सोयं शक्तो ह्यवति भवती पालितां सृष्टिमायां
त्वं नो दद्याः सुकृतिसुलभं ज्ञानवित्तं यशस्वी ॥ ४७ ॥

यस्या मूर्ति मनसि सदने भूमिपाः संश्रयन्ते
लब्धैश्वर्या हतरिपुभया राष्ट्रमोदं वहन्ते।
भूदेवाद्याः शमितवृजिनाः पुत्रपौत्रैः कलत्रैः
दीर्घायुर्वोऽवतु च ददतां जङ्गले वासशक्तिम् ॥ ४८ ॥

दुर्गा श्रीः सरयूर्नदाश्च विविधा पत्न्यो मुनीनां शची
शर्वो देवपतिर्दिवाकरमरुच्छीतांशवोऽन्ये सुराः।
आयुस्वास्थ्यकराभवन्तु निर्शिला मार्गाभुवो जाङ्गलाः
वृक्षाः स्वादुफलैर्जलं वहुगुणं काम्यं स्फुरेत्ते पुरः ॥४६॥

जग्राह चरणौ मातुः सौमित्रिस्तदन्तरम्
जलजे इवाक्षिणी तस्या हिमास्रांशुकसंवृते ॥५०॥

कमलविष्टरसन्धृतविग्रहे
जननि तावकसूनुरहं विभो।
कुरु कृपां मयि पङ्कजमालिनी
कृणु शुचं सुखिनीं जननीमिव ॥५१॥

गर्गे कुले श्रुति विहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसुनुः।
नारायणो वदति सप्तमकेऽत्र सर्गे
प्रास्थानिकं रघुपतेः सह लक्ष्मणेन ॥५२॥



## ऊर्मिलीयमहाकाव्ये

## अष्टमः सर्गः

अतनुकान्तिरसौ रघुनन्दनः
प्रजविमानिवदान्यधृताङ्घ्रिकः ।
तरणिकान्तिविकाशिपयोजवत्
गृहमभासयत स्म तदा रहः ॥ १ ॥

गृहमुपेतममुं सुसमीक्ष्य सा
तनुमती स्मितिमादधती बभौ ।
रतिरिवामलकान्तिविराजिता
इनमभीक्ष्य लता कमलं यथा ॥ २ ॥

राज्ञा रामे भुवनपतिना यौवराज्याभिषेके
तस्मिन् प्रीतिं वहति मधुरां वल्लभो मे हृदीशः ।
देहाद्भिन्नावपि सहचरावेकप्राणाविवात्र
सार्कं चर्यान् मम पतिरसौ राज्यभारं वहेत ॥ ३ ॥

सौहार्दान्मे प्रणयसुभगश् शक्रतुल्योनुरक्तः
नित्यं हृष्टो भवति कमनस् सूर्यसादृश्यसेवः ।
निर्द्वन्द्वो वैरिहननामतो राजविद्याप्रवीणः
आगच्छन्नस्ति मम पुरतो ज्ञापनाय त्वराभिः ॥४॥

धन्यो वेधा यदि मम पुरो रामराज्याभिषेकं
दैवान्नीतो नयनसरणिं पूजनीयो मयाऽद्य ।
विप्रास्तर्प्या मधुमयफलैर्मोदकैस्स्वादवद्भि-
र्गावो देया सुसुतसहिता दुग्धदात्र्यस्सभूषाः ॥ ५ ॥

अर्च्या देवा विकचकमलैः फुल्लकल्हारधूपै
र्मान्यै हृद्यैर्मसृणवसनैर्जाह्नवीतोयपूक्तैः ।
गन्धैरम्यै घृतदधिपयोमाक्षिकैः शर्कराभिः
आरार्तिक्यैः शशधरभवैस्तण्डुलैरासनाद्यैः ॥ ६ ॥

भूदेवा येऽतिथिऋषिधाः श्रोत्रिया ब्रह्मनिष्ठाः
द्वैतध्वान्तोपरतिपरमाः पीतसंसारबन्धाः ।
आयातास्ते मम पितृगृहं ज्ञानमाप्तुम् महान्तः
तेषामाशीर्वितरति शुभं कामये यं यमस्मि ॥ ७ ॥

आशा एता मनसि निहिता मोदकान्यापचन्ती
भूयो भूयो मरुकिरणकैस्तोषमाप्तुम् मृगाली ।
याथातथ्याद् विधिविलसितं भिन्नमस्तीति विद्धा
दक्षेनाक्ष्ण पुनरचलि सा भीषिताभून्मृणाली ॥ ८ ॥

वामाक्षे त्वं मनुजरमणी मान्यबन्धुत्वभासि
क्षिप्रं स्पन्दैः प्रियमभिमतं दर्शयेर्मे यथावत् ।
कुर्यादविघ्नान् हिमगिरिदरीस्वाप्यमानानजस्रं
नन्देदात्माविमलपति भी राजवन्द्यैः सुबुद्धेः ॥ ९ ॥

भ्रातस्तावत्स्मरनिजविधिं भ्रातृभावाभिरम्यं
स्वस्रे दत्तानभिमतवरान् धर्मराजेन पूर्णम् ।
तीव्रं तापं शमयति रवेर्नीरदोऽप्राथ्यर्मानः
शक्तिः साधो सुखयति दृढं स्तोत्रवाचं विनैव ॥१०॥

मृद्वङ्गी सा विविधसरणीप्राप्तभावाननेकान्
ध्यायन्ती स्वान् विधिकृतशुभान् मौनभावं जुषाणा ।
अस्त्रैर्नेत्रे मुहुरुपचिते कुर्वती गर्वितेव
अत्यासन्ने स्थितमपि पतिं नो बुबोधाञ्जसा वै ॥११॥

दास्यास्तस्याः प्रियतरवचो बोधितासीच्छुभाङ्गी
अभ्यर्णस्थायिनममुमिमं विस्मिताऽऽलोक्य हृष्टा ।
व्यग्रा भीता मुकुलितकरा स्पष्टमूचे नताङ्गी
स्वामिन् भ्रान्तं न कृतमनया ज्ञानपूर्वं क्षमस्व ॥१२॥

दीनानाथानगतिगतिकान् त्रायमाणान् विभर्षि
धत्से विद्वत्समितिसुकृतां मान्यसम्मानराशिम् ।
धात्री त्वत्पादकमलरजोधूतपापा त्रिलोक्यां
स्वर्गं निम्नं गणयति सुरान् वस्तुकामान् करोति ॥१३॥

श्रौता धर्माः स्मृतिविवरणा रोचमाना सदा ते
धर्म्या प्रीतिर्वसति हृदये तावकीना सतीषु ।
आदर्शं त्वां धवमतिकरीं सर्वभावेन पत्न्यः
कांक्षन्ते स्वं तवकृतपदं धर्ममार्गे हितार्थम् ॥१४॥

किं तत्कष्टं हृदयनिहितं दूयमानासि येन
धातूनां वा सुविषमतया स्वेष्टप्राप्तिं विना वा ।
आदिष्टं यद् दधति सततं कर्मकर्योऽविशङ्का
भीता कस्माद् भवसि भवती साश्रुनेत्रा भवन्ती ॥१५॥

किं वा जन्मान्तर भवकृतात् पापराशेः प्रजातम्
प्रारब्धं तद्रुजति हृदयं पुष्पवत्ते तुपारम् ।
रोद्धुं यन्नो प्रभवति सुरो मानवा वा सुरेशः
तस्मादार्ये वद हृदि गतं भावमस्मत्समक्षम् ॥१६॥

शाठ्यं केनाचरितमशुभं मर्मपीडाप्रनदायि
तस्याऽहं वै मनुजभुवने धर्महीनाधमस्य ।
भ्रष्टे मार्गे सुधृतसुपदां प्रेरणां कुर्वतोऽस्य
सद्यः कामाक्षलितशिरसः कर्तये धर्मगुप्त्यै ॥१७॥

उक्तं यत्तत् किमपि वृजिनं भासमानं न चास्ति
देहे स्वस्थे जपति निखिलं मानसं चिन्तनं तत् ।
भोगाः सर्वं मम हि पुरतो ध्यायमानं सदैव
गत्या भीता ह्यशुभफलया दक्षनेत्रस्य तावत् ॥१८॥

भास्वान् नित्यं भ्रमति गगने भासयन् सर्वलोकान्
दत्तानन्दा कुशलजनता प्ररयत्यात्मकार्ये।
सर्वानन्यान् मनुजनिवहान् प्राणिनः पोस्यमाणान्
कुर्वन् धत्ते विलयमुदयं साधयत्यन्यकार्यम् ॥१९॥

गोत्रे तस्य त्वमसि सुवधुः पूज्यमाना सतोभि-
रग्र्या धर्मेरतिरभिनवा भासतेऽभूतपूर्वा।
स्वार्थे तावद् व्यतिषजति तन्मानसं नोचितं ते
सर्वो धन्यस्त्यजति निखिलां स्वार्थमन्यार्थमेव ॥२०॥

नेत्रस्यन्दः सुतनुभवतीं खेदयेच्चेदिदानीं
नैतद्युक्तं प्रकृतिसुभृति कुर्वतां पत्नि तुभ्यम्।
देहो राज्यं सुतगृहबलं क्षत्रियाणां प्रजार्थं
मादृग्जन्तुं सहचरमवे राष्ट्ररक्षाध्वनीनम् ॥२१॥

मांसोत्सर्गं कृतवति शिवौ राज्ञि पारावताय
शारीरं वैरिहननकृते दानिमर्धन्यमान्ये।
विश्वैर्वन्द्ये भुवनतिलके दानवीरे विशुद्धे
कीर्तिः स्वच्छा ह्यलभत पदं पूजितं भूतसंघैः ॥२२॥

राज्ञस्तस्य ह्यमरयशसो नामधेयोऽधुनापि
जिह्वाग्रं नः स्पृशति हरते पापपुञ्जं जनानाम्।
रोचिस्तस्या स्तमयति तमो धर्मसेतौ रतानां
कीर्तौ प्राणात् प्रियतमरुचिर्मानिनां राजपुत्रि ॥२३॥

आर्ये तस्माद्विपदि सुदृढं धैर्यमालम्ब देवी
　वृद्धौ क्षान्तिम् सुतनु कुरुतां दीनहीने दयां हि।
सत्यां शक्तौ जनहितकरीं शान्तिमाहुः प्रशस्यां
　नो चेत्तां कापुरुषसुमतं भावमाख्यान्ति शूराः ॥२४॥

लोकेमृत्यावनुदिनमिहाऽऽघ्नन्ति जन्तून् सुखार्थं
　राष्ट्रद्रोहे विदधति सदा स्वार्थहीनं परेषाम्।
धर्माद् दूरे कलहरुचयो वञ्चनापूर्णदेहाः
　ते सन्त्यस्मिन् सुखनिगडिताः कष्टसंस्पर्शहीनाः ॥२५॥

मैवं संस्था सुमुखि सततं दैवजन्यं हि सर्वे
　पापाचाराः प्रवरकृतिनो धर्म्यकार्ये प्रसक्ताः।
दुःखं मोदं नियतसमये भुञ्जमाना ध्रुवं वा
　वर्तन्तेऽमी न तु विफलतां काम्यकर्मानुधत्ते ॥२६॥

धात्री धत्ते त्रिभुवनमदो भाति सम्यङ् न युक्तं
　क्षीरै रत्नैर्विविधसुफलैर्भाज्यजातैश्च भोग्यैः।
संख्यातीतैस्तृणकुशलतैः पोष्टुमीषीत यत्सा
　नो चेद् वामाः प्रणयकुशलाः सृष्टिमूला भवेयुः ॥२७॥

गाम्भीर्यं ते जलधि तुलितं रोचमानं विशिष्टं
　दार्ढ्यं शम्भोर्गिरिवरसमं सर्वलोकातिशायि।
स्वे स्वे भातो न तु तदपरे माननीयौ गुणौ तौ
　प्रेम्णा धत्तस्तवतनुममुं सत्कृतां श्लाघ्यवन्द्यैः ॥२८॥

राजा स्वीये वयसि चरमे वष्र्मशक्तेरभावं
दृष्ट्वा खिन्नो नृपतिककुदं दित्सुरासीत्सुताय ।
मात्रा तावद् विघटितमहो याति वस्तुं वनाय
रामो राज्यं त्यजति तृणवद् रोद्धुमिष्टेन लक्ष्मीः ॥२९॥

धातुश्चिन्त्यं फलति मनुजैर्दूरदेशं प्रयाति
नो गम्यं यत् पुरुषमनसां भाति सद्यः पुरस्तत् ।
दृष्टं लोकैरनुभवयुतैर्रामराज्यस्य घातात्
सिद्ध्यत्येवं बहुबलवतो भोग्यलब्धिः सुदैवात् ॥३०॥

आजन्माद् यौ भुविसहचरौ खे जले वान्तरिक्षे
क्रीडाशय्याप्रहसनशये युध्यमानौ रणे वा ।
शस्त्रे शास्त्रे प्रबलपटुतां नीतिशास्त्रेऽर्थशास्त्रे
राष्ट्रे ग्रामे पुरि परिजने दर्शयन्तौ सहास्ताम् ॥३१॥

सिन्धौ पद्मं न वसति जले नीरराशिर्निरर्था
आकाशे नो गमयति शशी रोचिषां जालकानि ।
व्याप्तिर्व्यर्था वियति सुतता म्लानतां यान्ति लोकाः
रामे याते वनमवनिपः पीड्यमानोऽशुभैः स्यात् ॥३२॥

नाहं त्यक्तुं वनमभिगतं राज्यनिर्वासितं तं
मित्रामात्रापुरजनहितै - र्हीनमात्मीयदासैः ।
आर्या सेव्यं बुधजनसुखं धूतपापं वरेण्य-
मात्मारामं श्रुतिमुनिसतां सेवया भासमानम् ॥३३॥

तस्मादावामिथुनवसमा वन्यभूमिं श्रयाव-
स्तन्मित्रं यद्विपदि सहते मित्रपीडां सहैव।
हत्वा विघ्नं तदुपरिभूतिं साधनैरानतोति
तल्लभ्यं यन्न भवति समैर्भाग्यवन्तं विहाय ॥३४॥

श्वश्रूः सेव्या नृपतिसहिता मध्यमापि त्वया वै
भूषावेशौ निजकुलगतौ धारणीयौ यथा स्वम्।
आज्ञामेषां प्रवहसततं प्रीयमाणाऽखिलां त्वं
कीर्तिं शुभ्रां सुरपतिगृहे मानमीयाश्चिराय ॥३५॥

हर्म्ये स्थेयं प्रकृतिललिते स्वादुभोज्यान्नपूर्णे
रम्ये स्वच्छे स्फटिकसदृशे रत्नराजिप्रभाभिः।
गाढध्वान्ते गिरिवरदरीस्वापसंश्लेषजुष्टे
कालो नेयः प्रहसनचणैर्दासदासीसहस्रैः ॥३६॥

दास्यो भावः पतिविषयको धार्यमाणः सुराज्यः
कस्मान्तस्मान् मुकुलितदृशां योगिनां योऽतिरम्यः।
यं श्रित्वा ते युगमिव समां शर्वरीतुल्यवर्षं
रात्रिं चाहो सुमुखि लवतां प्रापयन्तो रमन्ते ॥३७॥

वर्ज्या यात्रा परगृहरतिर्हिस्यवार्ते परैर्नु
नृत्यं गानं सुजनविमतं सङ्कुलं काभिवृत्तैः।
श्रद्धाहानिः कलहभृतिका प्राणिहिंसाविरामो
धर्माच्छ्रौतान्निजकुलमताद् वञ्चना मानवानाम् ॥३८॥

सौम्यो देहो बहुजनिभवैर्मानवेन्द्रे सुगोत्रे
पुण्यैर्लब्धो न हि लवसुखं प्राप्तुकामा जहीहि ।
तस्मादार्ये पथि सुचलितुं यत्नमाधेहि सुभ्रूः
भायात्कीर्तिर्हिमगिरिनिभा भीषयन्ती तमोन्धम् ॥३९॥

राष्ट्रस्वार्थे निजहितबलिं कुर्वतां मानवानां
देहोत्सर्गं पर कृतकृते त्यागिनां नैष्ठिकानाम् ।
राज्ञां नीतौ प्रवरविदुषां लोकविद्याचणानां
क्षुण्णं मार्गं श्रयसि रसिके मोदलब्धिर्द्वये स्यात् ॥४०॥

तस्माद् धैर्याद् गमय दिवसान् साधयन्ती शिवं स्वं
शीलं वृत्तं स्मृतिसुविदितं धारयन्ती रमस्व ।
हन्त्री न स्यास्त्वमिह सुकृतौ यत्नमाधत्स्व साध्वि
धर्मं नार्या ह्यरसि कुरुतां योस्ति मूलं वृषाणाम् ॥४१॥

अर्धाङ्गित्वं प्रवरमतयो धार्मिकाः सत्यनिष्ठाः
येषां वाणी प्रमितिकरणे मानमापन्नृलोके ।
ऐन्द्रेप्यस्मिन्नयति पदवीं काममोक्षेषु नित्यम्
आहुर्लोकं पणनकुशलाः पूजनीया सुनारी ॥ ४२ ॥

अर्धो देहः पुरुष रमणी प्राणवान् येन विश्वम्
मान्यस्तस्मादपरसचिवैर्देहवद्भि - र्यथावत् ।
भासत्येवं बहुफलवती लोकसंस्थानलक्ष्मीः
पत्नी ह्यातो निदिस सहसा वन्ययात्रां मदीयाम् ॥४३॥

कामं भर्तुर्न खलु सहते सम्मतिं मादृशीना-
मस्वातन्त्र्याद् धृतधवधियां मान्यनिष्पांशुलानाम् ।
इष्टिर्ह्‌द्या पतिकुशलताभिन्नपद्यां वृणान्ते
नात्मार्थे ता विषयशयनं कामयन्ते धरायाम् ॥४४॥

गन्तव्यं ते वनमभिमतं मातृसौहार्द्रसेव्यं
पित्राज्ञप्तं प्रकृतिहितदं नानुमन्यं सुभर्तः ।
रामे प्राप्ते दशरथनृपो हार्द्रपीडाप्रपन्नो
वज्राविद्धो द्युतरुरिव हा नाशमेष्टा ध्रुवं सः ॥४५॥

हीनं राजा जनपदमदश्चौरलुण्ठाकभृष्ठं
लुम्पेत्सद्योऽगणितविपदां राशिकूटैर्विपक्वम् ।
रामेणाथोऽतुलितमहसा शक्तिभाजा त्वया नो
शान्तिर्देशे वनगतिमता लक्ष्यमाणा कदापि ॥४६॥

वार्द्धक्ये ये न दधति पचः प्राणगुर्वङ्गनायाः
नव्योढायाः प्रतिपदविषं दन्दहीतीतरांश्च ।
अन्विष्यापीदृगमतिचणा नैवलभ्यास्त्रिलोक्यां
तेषां मान्यां वहति पदवीं भ्राजमानो नृपोऽयम् ॥४७॥

अप्रामाण्यैर्जरठवचनं जुष्टमिच्छेः प्रमाणम्
कर्तुं शक्यं नहि मृगमदो घ्रीयमाणः सुनासा ।
निह्नुयेताऽनृत - सुशपथैर्लोकविद्विष्टमेतत्
तस्मादार्यो ह्यतिपथगतं मुह्यमानं विमात्रा ॥४८॥

आप्तै मित्रैः प्रवरसचिवैर्भूपमात्मीयविज्ञै-
र्राष्ट्रे ग्रामे पुरि जनपदे यैश्च नीतौ प्रवीणैः।
साम्ना दानैरनुनयगुरुं पालयेर्जन्मभूमि-
मार्या एवं भवतु सुखिनी भूतधात्र्या सहैव ॥ ४९ ॥

आज्ञां पैत्रीं शिरसि कृतवान् राघवस्तातसेवी
भद्रां युक्तां न हृदि धृतवान् मर्मपीडाप्रदात्रीम्।
त्यक्त्वेत्यम्बा रुदितमुदिता नाथहीनाः प्रजाः स्वाः
यातोऽरण्यं प्रथितयशसां तातसेवारतानाम् ॥५०॥

कीर्तिप्रेमा गमयति वनं मत्तनागेन्द्रकीर्णं
राष्ट्रप्रीतिर्नं वसति मनो जीवरक्षाप्रधाना।
का ते युक्ती रमयति हृदं नीतिनिष्णातमान्या
श्रोतुं योग्या यदि मम भवेद् ब्रूहि भर्तः शिवाय ॥५१॥

पूर्वं स्वामिन् समयसदृशी लोकदेशानुकूला
चिन्त्या वृत्तिः सुगहनदृशा स्वेष्टसिद्धेः प्रदात्री।
यैवं सूते परिणतिफलं काम्यमात्मीय भोग्यं
नो चेदेवं कठिनवृजिनैः शल्यतुल्यैः क्षतः स्यात् ॥५२॥

मान्यो धर्मः स इह कलितो येन रक्ष्या त्रिलोकी
जीवान् सर्वान् सुखितमुदितान् कर्तुमिष्टे त्रिकालं।
अन्वर्थत्वं भजति सुसुखं धारणाद् योजनानां
नो चेदेवं श्रयति विफलं नामधेयं विनिन्द्यम् ॥ ५३ ॥

आसीद् गोत्रा वृजिनरर्णाचकैरविरणाद्यैः सुतप्ता
वन्ये देशे तृणकृतगृहा दिव्ययज्ञेषु लीनाः।
वार्द्धक्ये ये हृतभवरुजो रामराज्यं चकाङ्क्षुः
त्यक्त्वा यातो मुनिवनतरुं को नु रक्षेत्ततोन्यः ॥५४॥

राज्यं कुर्वन् गृहमधिवसन् सैन्यकोशैः सुपुष्टो
रामात्त्वं वा दमयितुमनास्त्राणकृत्यं दधीथाः।
अन्यत्कार्यं दधदपिबलैः साधयेत्ताच्चिकित्सा-
मेको जन्तुः कथमिह क्षमो यापयन्स्वान्यहानि ॥५५॥

दाने शौर्ये श्रवसि गुरुतां मेरुतुल्यां दधानो
राज्ञां नीतेश्चयनपटुताभासितर्कैः सुरम्यः।
मान्यो वन्धस्त्वमसि भवतात् तापहीनो मदुक्ताद्
विज्ञैश्चिन्त्यो न हितवचने व्यक्तिभावो जनानान् ॥५६॥

तत् क्षन्तव्यं कटुहितवचो नाथ सर्वस्वमूर्ते
पूर्णो जन्तुः प्रभवति स वै पूर्यमाणो निजाङ्गैः।
नानातङ्काग्रसितहृदयो निन्द्यमानः परैः स्वैः
नो चेद् भुङ्क्ते विषरसफलं सेवितो दुःखलक्ष्म्या ॥५७॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः ।
नारायणो वदति नागमितेत्रसर्गे
सौमित्रिशिक्षणमथो जनकाङ्गजायै ॥५८॥



## ऊर्मिलीयमहाकाव्ये

### नवमः सर्गः

सत्यं ब्रवीति भवती रमणीयकान्ति-
भीतिर्मनो विशति साधु स्वभावशीला ।
वन्यं मदीयगमनं नहि नीतिपृक्तं
भ्रात्रा समर्थितमतश्शुभदं त्रिकालम् ॥ १ ॥

आर्या पुरस्कृतियुतो यदि याति रामो
रोद्धुं क्षमो नहि तमस्मि न वा निवर्ते ।
अन्वेमि नीतिगरिमा न मनोऽनुजुष्टे
युक्तो गमो जनहितो न विवेक्तुकामः ॥ २ ॥

नीतिः समाद्रियत शुक्रसमस्य यस्य
लोकेऽधुना विफलता कथमङ्कमागात् ।
सञ्चिन्तयन् निकषतर्कसरो निमज्जन्
भ्रात्रानुवृत्तिरमिता दृढनोर्भवस्य ॥ ३ ॥

वैदुष्यमात्मनि धृतं नयशास्त्रपृक्तं
राष्ट्राय ध्येयमसुखं विपदां सपत्नम्।
व्यक्तं त्वया सुमुखि भासि समं सुधांशोः
धन्यं परं नहि यदस्ति गुरो सुवाच्यम् ॥ ४॥

सामर्थ्यमञ्चतितरां नहि तर्कमात्रं
वस्तुक्रियासुविरतिं श्रयतेऽनवस्थाम्।
दृष्टानुमानविहितौ कुरुते प्रकाश-
मात्मश्रुतिस्तदिह रामवचः प्रमाणम् ॥ ५॥

तस्मात्प्रिये त्वमिह राजगृहे रमस्व
ध्यायेर्गुणान् सुचरितानि महासतीनाम्।
मृद्वी भवेः परिजने सततं दयस्व
आर्तान् स्वकान् तदितरान् हि गुरून् भजस्व ॥ ६॥

कुर्वीत भीतिमशुभान्मनसो ह्यधर्मात्
द्रोहाद्विशां सुकृतिनां मनुजेश्वराणाम्।
देशोद्भवाः सुतसुहृद्समतासुमान्या
स्वीयैः फलैर्जनि भुवस्तु फलं विशेषम् ॥ ७॥

माता - विमातृ - वचना यदि मोहमाच्छेत्
खिन्ना सती स्मृतिपथं ममतां सुगूहेत्।
आशानुरक्तिललितैर्गुरुता सुपोष्यैः
तृप्तिं कुरुष्ववचनैस्सुहितैस्त्वमस्याः ॥ ८॥

जन्तुः समाजविरतिं कलयेत्समन्ता-
न्नाशं दधीत यशसोऽवमतिं विचित्राम् ।
स्वीयां स्थितिं गुरुतरां विदधत् विवेशात्
तस्मात् प्रिये कुरु समाजरतिं सुयत्नैः ॥ ९ ॥

नाशं त्वया मम कृते ज्ञपितं यदेतत्
वृष्टिर्यथा भवति सस्यहिताय काले ।
पीयूषवर्षि जनतापहरं तथाऽपि
भर्तृ व्रतार्यमहिलामनसाप्यचिन्त्यम् ॥१०॥

बाल्ये पिता प्रणयभूतिमयी सुशीला
माता सुता भवति दुःख शतं सहन्ती ।
तारुण्यके प्रियधवस्तनुते सुरक्षाम्
पुत्रास्तुरीयवयसि प्रयता भ्रिर्णाते ॥११॥

प्रावृषि सरोऽतिवहनात् स्खलितं दुनोति
नारीवयस्त्रुटिशतं श्रयते ह्यपूर्वम् ।
स्नात्वा जनस्सुखितमो धुनुतेनुतापम्
धत्तेऽपरत्र - गहनं सहतेऽवमानम् ।.१२॥

तत्रापि मध्यमवयस्स्खलित प्रधानम्
वारां निधिं तरितुकामयुजे सुपोतम् ।
भर्तारमात्मसुखदं गुरुणा सुयोजम्
धर्म्यं विहाय कृतिमान् भवितुं न चान्यः ॥१३॥

तारुण्यभाव्यमदनो हरिरेव साक्षात्
शीलं दयां सुविनयं ह्रियमात्मधर्मान् ।
राज्यं धनं गुरुनिवास सती सुशिक्षा
लोप्तुं क्षमोऽक्षिचलने पतिमन्तरेण ॥१४॥

वाय्वम्बुपल्लवभुजोऽग्निसमान् महर्षीन्
विद्यातपोभिरखिले भुवने प्ररूढान् ।
भूतं भवद् जगति भावितमं नराणाम्
भोग्ये फले करधृते वदरं सुवेत्तॄन् ॥१५॥

शान्तानगाधगरिमाहृतपापराशीन्
तेजोबलेन तपसा त्रिदिवं प्रपित्सून् ।
नानप्ययं प्रततबोधमयान् सुदान्तान्
कामोऽतपत युवतयः किमु नो सुताप्याः ॥ १६ ॥

शास्त्रं मिथो दिशति दम्पात वासमस्मिन्
लोकस्थितं दृढतरां सुखदां स सूते ।
कीर्तिं तनोति विशदां प्रणयं प्रजासु
देशोन्नतिं फलति साधयतेऽर्थकामौ ॥ १७ ॥

आर्यैः सृता सुसरणिः शिरसा प्रतीक्ष्या
मान्याऽखिला तव धिया बहुधान्ववोचि ।
आर्यानुगच्छति वनं पतिना पदाति-
रन्वेम्यहं कुशतृणावृतदुर्गमार्गम् ॥ १८ ॥

आप्तुः कृतिं तदितरे परिशीलयन्ते
भाषाप्रयोगविधिना शतशोऽनुभूतम् ।
शीलश्रिया सुचरितैर्वनमेति ज्येष्ठा
कार्यानुवृत्तिरिति मां पुरतो ब्रवीति ॥ १९ ॥

भारो न ते शिरसि मे गमनाद् बहु स्यात्
नीरं फलं तव कृते स्वयमाहरिष्ये ।
भ्रातुः प्रियाऽऽर्यश्रवसः सहितस्य देव्या
हृष्टा सदा सुमुखपद्मश्रिया तवैव ॥ २० ॥

वन्यो गजो विरसभोज्यमहामहिम्ना
वृक्षत्वचा प्रतिदिनं स्वरतिं बिभर्त्ति ।
ओजोभृतामसुमतामतुलो महस्वान्
कर्षन् तरून् सहशिफैर्हरते सुदीर्घान् ॥ २१ ॥

घस्राष्टमप्रहरमेत्यदिनावसाने
रात्रौ फलं परिणतं यदि वा विपक्वम् ।
शाकं जलेन लसितं शयनं धरायां
प्रेम्णा तवेह ललितं सुधया समं मे ॥ २२ ॥

विष्णुर्भुजङ्गशयनो रमयाऽभिजुष्टो
विश्वस्थितिं शुभमयीं कुरुतेऽनुकाम्याम् ।
वाग्वैभवाद् द्रुहिणयत्नबलेन विश्वं
धत्ते पदं हरति कालपतिर्भवान्याः ॥ २३ ॥

योगो भवेन्न करयोः कथमात्मरक्षा
युज्येत मानवहितस्य कृति ≍ खपुष्पम् ।
व्यर्था त्रिलोकरचनापटचित्रवत् स्यात्
सद्यः क्षयेन्ममभृति श्रय नाथ तस्मात् ॥ २४ ॥

नाथाग्रतस्तवगति कुशकण्टकेषु
कुर्यां पदां त्रुटितुलामधिरोहयन्ती ।
तान्यञ्चतां तवपदं मुदमावहेताम्
आर्याः सतीत्वदनुयान्तु सुखं प्रसन्नाः ॥ २५ ॥

साकं मया प्रणयिनी मुदिता भवित्री
आर्या तयाहमपि मोदमयी भवेयम् ।
प्राणी निवेद्य गहनं सुखमात्मनोने
मुक्ति प्रयाति कृतिनां चरति प्रवादः ॥ २६ ॥

लावण्यमात्मनि तुलां तव संशयस्य
आरोप्य भित्ससि वचं सुदृढं मदीयं ।
गाम्भीर्यशिक्षणपटोः सुधियो न हृद्यं
नावैगुणा पुरुषवस्तु विशेष रूढाः ॥ २७ ॥

नित्यं रविस्तपति खे विलयन् तमोन्धम्
चन्द्रोऽनिशं कुमुदलोकमुदं तनोति ।
वह्निर्ज्वलत्यनुदिनं भुविकर्महेतुः
नारी सती सुकृतिपोष्यबलायदेते ॥ २८ ॥

येस्तापिता जगति साधुजना महान्तो
मर्यादितं श्रुतिपथं विहृतं समन्तात्।
शुम्भादयो विजितशक्रपुरामदान्धो-
र्नीताः समे यमपुरिं शिवया जनन्या॥ २६॥

शौर्यं रणे सहनशक्तिदयासुतोषा
रागो नवो नयतरोऽनुदिनं प्रजासु।
मातृत्वशक्तिरमिता सुतता धरायां
अन्वेति नाथ वनिता सुसमासु तादृग्॥ ३०॥

प्राथम्यमेमि बहुधा बहुमानवीषु
स्वीयैर्गुणैस्सुलभमस्ति पदं द्वितीयम्।
भिन्नं ह्ययान्न पदमेमि पतिव्रतानां
तद्धेतुका हि वनिताः सगुणास्तथा स्युः॥ ३१॥

इच्छेत् सती यदि परां भुवनस्य कर्तुं
सृष्टिं तदा स्वभिनवां तनुयादवश्यम्।
ब्रह्मा तपोर्जितबलाज्जनितुं समाधेः
पातिव्रतेन ललना नियतं समर्थाः॥ ३२॥

नो केवलं विधिरिवातनितुं जगन्ति
सामर्थ्यमासुनिभृतं विधिना प्रमार्ष्टुम्।
सावित्रनाथमनयन् यम एव मानं
नेया वनं वृजिनमत्र कियत् प्रमाणम्॥ ३३॥

धर्म्यां कृतिं स्मृतिपरां मनुजाधिहन्त्रीं
संलक्ष्ययाचितवती गमनं वनस्य ।
पीडां जिघासुरखिलां मदनान्न तावत्
आदर्शसम्मितिधुरां वहतां कथन्नु ॥ ३४ ॥

यद् ब्रह्म विश्वमद उद्भयते विशालं
रक्षत्यहर्निशमथो विनिहन्ति काले ।
सत्त्वप्रधानप्रकृतौ फलिते तमोन्धं
सूर्यो यथा क्षपति भासयतेऽन्यथा नो ॥ ३५ ॥

भूम्यम्बुखाग्निपवनै - र्जगतोनुसृष्टि-
र्मात्राश्रितैर्भवति नो रहितैर्महद्भिः ।
दीपो दशासुलसितो दधते मयूरवान्
चेन्मां कथं द्युतिमयीं वियुतां विधित्सुः ॥ ३६ ॥

यज्जङ्गलं भयकरं मनुजार्तिदायि
प्राणार्थनाशकरणे पटुता सुभास्वत् ।
स्वान्ते स्मृतं सपुलकां स्वतनुं विलेढि
योगात्तवात्र सुखदं गृहवत्सुरम्यम् ॥ ३७ ॥

दासीशतैरनुचरै - र्गजवाजिसंघै-
र्मुक्ताफलैस्तुहिनकान्तमयैः सरत्नैः ।
आमोदसाधनहितैस्तडितां प्रकाशैः-
रम्या गृहाः सुविपिनानि विना प्रियेण ॥ ३८ ॥

सम्पद्विपद्दृढतनुं दधतेऽतिरम्या
भर्ता भवेन्न यदि पार्श्वगतो मनस्वी।
दाक्षिण्ययुक् सुतुलितः शशिना यशस्वी
चेतो दुनोति मसृणं बहु कामिनीनाम् ॥३९॥

नो चेत्पतिः प्रणयमूर्तिधरस्तरस्वी
अर्वाक् स्थितो मदन पुष्पशरातिशत्रुः।
तन्वी चिराय किरती नयनाम्बुमुक्ता
ऊधी मुखं स्नपयते कृशता सरस्याम् ॥४०॥

सामीप्यमञ्चति धवे विपिनं भयाढ्यम्
स्वर्गायते गिरिणदी ददते हिमाम्बुः।
मित्रीयते खगकुलं रमयत्यजस्रं
मात्रीयते तरुगणो मुदमातनोति ॥४१॥

नाथ त्वया सह पदा वनमेमिरम्यं
वीरुद्व्रजं खगगणं बहुवर्णरूपम्।
रम्यां स्थलिं मृगकुलं प्रचरज्जवेन
हिंस्रान् गजान् विकिरतो निनदान् समीक्षे ॥४२॥

आजन्म नोऽक्षि विषयं गतमस्त्यरण्यं
नो वा गिरिर्हिमगुरुः शिखरैः सुसेव्यः।
वंश्या मनो शिखरिजाः किमु वृत्तशीला
ध्यायन्ति यत्र ऋषयोऽमलदान्तशान्ताः ॥४३॥

सम्प्रार्थितोतिमधुरैः प्रियतानुरक्तै-
स्तर्कामृतैः सुवचनैः परिपूतरूपैः।
आगामिभूतभवतां सुखितैः प्रतीक्ष्यैः
सौमित्रिरात्मनिभृतो विशयैर्विशेषैः ॥४४॥

सार्धं प्रिया मम पुरो वनमाप्रतिष्ठेत्
तिष्ठेद् गृहे त्रिदिवतुल्यमुदां सुराशौ।
साकं नये खलु भवेन्नहि शीलरक्षा
शीलानलंकृतनरो लभतेऽवमानम् ॥४५॥

भार्याद्वितीयभरताग्रजमात्मवन्तम्
अन्वेमि धर्मरसिको न तु काम्यकामी।
भार्यासहायमभिलक्ष्य हृदो विकारः
अग्रे स्फुरन् सुलघुतां परिशीलयेत ॥४६॥

दान्तं मनः सुमदनो मथितुं न शक्तो
नारीसहायपरिपुष्टवपुः सहेत।
छन्नस्तुषानलकणोऽनिलवेगनद्धः
आर्द्रैस्तृणैः परिवृतं प्रवणं हिनस्ति ॥ ४७ ॥

रोगो यथौषधिबलेन हृदा सुगुप्तः
साम्येतराभिमतरूपरसैः प्रवृद्धः।
जन्तुं निहन्त्यविकलं न तु रुद्ध्यतेऽसौ
कामस्तथा युवतिनेत्रनिमेषजुष्टः ॥ ४८ ॥

एवं सुतर्कविटपीबहुदिक्प्रशाखः
सौमित्रिहार्दविषयो विचिकित्सितोभूत् ।
नेत्रे निमील्य पटचित्रनिशाकरांशुः
रेजे विमर्शपतितो नयशास्त्रविज्ञः ॥ ४९ ॥

आलोक्य सा नु पुरतो धवमुत्तरेण
हीनं प्रियं विधिनिषेधपराङ्मुखं किम् ।
आलिङ्गयसे त्वमिह मूकतयेत्यवोचन्
मत्तः प्रियां हृदिगतां कुरुषेऽशुभां ताम् ॥ ५० ॥

अस्रैर्मुखं शशिसमं जलबिन्दुतुल्यै-
र्व्याप्तं निशम्यभरतानुजधूमकेतुः ।
वध्वा धृतो प्रणयवान् स्वकरेण मृष्ट्वा
वाचं मृदुं प्रतनयन् विहसन् जगाद ॥ ५१ ॥

वल्गु प्रिये न गदितं श्रुतिशास्त्रसिद्धं
वक्तुं हितं सुरगुरोरपि याति शक्यताम् ।
शीलं जनं निरुपमं भुविभासयेत
रक्ष्यं परं तदिह लेशमितं न चास्ते ॥ ५२ ॥

शीलश्रिया युवतयो मनुजा गुणाढ्या
जुष्टा धनैः प्रमुदिता जनता सुपूज्या ।
राष्ट्रे पुरे परिजने भुवि वा ह्यवेन्द्रे
लोके भवन्ति सुखिनो न विदन्ति कष्टम् ॥ ५३ ॥

विद्यातपो विनयख्यातिमहत्त्वभोगा-
स्त्रैलोक्यशासनरता अमरेशतुल्याः ।
राजेश्वरा निहतदैन्यकलङ्कतापाः
शीले गते गुणमृतौ न तपन्ति लोके ॥५४॥

तस्मात् प्रिये वनगतिं हृदयाद् विदूरे
कुर्याः सती यदिह शीलयुता भवित्री ।
आर्यां निदर्श्य कुरु नोऽनुकृतिं त्वमत्र
सर्वंक्षमस्तुलयितुं न रविं सुधांशुम् ॥५५॥

निष्क्रान्तसंख्यजनिजैर्मनुवंशदेहः
पुण्यैर्धृतां भवसुखै न विपादनीयः ।
कष्टः शुभाय निजबन्धुहितानुभासे
सह्यस्त्वया पतिवियोगधृतावतारः ॥५६॥

कर्तव्यपद्धतिपरं वचनं न तस्या
सन्तप्तमानसमुदं तनितुं विषेहे ।
विद्युद्यथा हि कमलस्य मनोरमस्य
बिन्दोर्लवस्सुपयसो ह्ययसो दिधक्षोः ॥५७॥

अस्त्रैर्मुखं मणिसमैर्वसनं समन्तात्
क्लिन्नं विधाय रुदतीं वनितां निरीक्ष्य ।
प्राप्तं मया मनुपदं मुनिना गृहाण
यस्यौजसा प्रतिकृतिस् सुदृशा विलोक्या ॥५८॥

नद्यो यथा हि शिशिरे प्रभवन्ति हृद्या
मन्त्रे गते मनुरुचा रुचिमादधाना ।
पत्नीं सुलक्ष्य भरतावरजोऽप्रमेयः
प्राप्तो मुदं निरगमत् सदनात् प्रियायाः ॥५९॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः ।
नारायणोऽचकथदौर्मिलसम्प्रबोधं
सर्गे हिते नवमकेऽत्र कुलाङ्गनानाम् ॥६०॥



## दशमः सर्गः

आश्वास्य वनितां सम्यग् जगाम मातुरन्तिकम् ।
भुवं यत्र समाश्लिष्यन् पितापूर्वं समासदत् ॥ १ ॥
अवाङ्मुखोऽश्रुभिर्व्याप्तो गजो दानजलैरिव ।
वधूभिरिव ताराभिर्वृतश्चन्द्रो हिमांशुमान् ॥ २ ॥
वशिष्ठप्रमुखैर्मान्यैर्मन्त्रिवर्यैर्हितेच्छुभिः ।
मागधैर्वन्दिभिस्सूतैः कीर्णो राजातपद्भृशम् ॥ ३ ॥
रामोऽपि सीतया सार्धं पूर्वं तत्र गतोऽभवत् ।
वल्कलानि ददौ तेभ्यः कैकेयी कमलानना ॥ ४ ॥
गौरवात्ते पिता राम निदेष्टुं त्वां वनं प्रति ।
यातुं मोहादवचोऽस्थैर्याद् वक्तुमीशो न साम्प्रतम् ॥ ५ ॥
ततो मद्वचनात् सद्यो वासोऽलंकरणं शुभम् ।
राज्ञो योग्यं परित्यज्य गच्छारण्यं चिराय नो ॥ ६ ॥

पिता पूर्वं प्रतिज्ञाय इदानीं मोहमाश्रितः ।
कुरु सत्यप्रतिज्ञं तं वृजिनात्सम्प्रतारय ॥ ७ ॥

अनेवञ्चेद् भवेत्तात प्राणांस्त्यक्ष्ये तवाग्रतः ।
पितुर्वचो ह्यनादृत्य लोकगर्हां विवक्ष्यसि ॥ ८ ॥

कशयेव हतो वाजी अंकुशेव गजो यथा ।
रोमराजिर्हि रामस्य कण्टकैस्तुलिताऽभवत् ॥ ९ ॥

रथस्थान् धृतत्वग्वस्त्रान् प्रव्राजितान् विलोक्य तान् ।
मोहं प्राप्ता जना सर्वे ऊर्मिला तु विशेषतः ॥ १० ॥

अशुभेन स्वदैवेन तुहिनेनेव पद्मिनी ।
निहता मोहमाश्लिष्यत् दीर्घवियोगसत्कृतम् ॥ ११ ॥

आलोच्याऽसाम्प्रतं कर्म राज्ञो मातुश्च मन्त्रिणाम् ।
चुक्षुभे जनता स्वान्ते व्यरौत्सीन्मापि श्रद्धया ॥ १२ ॥

यावद् दर्शं गतदिशं निर्निमेषोर्मिला सती ।
पश्यन्ती साश्रुपूर्णाक्षि प्लुष्टा भवच्छुचाग्निना ॥ १३ ॥

भरतो नानुमन्येत न्यायी धर्मरतः शुचिः ।
श्रुतो वृत्तमिदं मातुर्विरुद्धं कुलशास्त्रयोः ॥ १४ ॥

प्रत्यावृत्य कुलान्मातुर्मातरं पितरं तथा ।
संतोष्य भ्रातरञ्चापि वनाद् प्रत्यानयेद्गृहम् ॥ १५ ॥

एवं विधान्यनेकानि चिन्तयन्ती भृशं हृदा ।
दासीभिर्धृतदेहा सा कथञ्चिद् भवनं गता ॥ १६ ॥

गङ्गायास्तटमासाद्य रामः सूतं परानुदत्।
शून्यं स्यन्दनमालोक्य प्राणान् सद्यो जहौ नृपः ॥१७॥

तूर्णं विज्ञातसम्वृत्तो यातोऽयोध्यां धृतत्वरः।
स्वां मातरं स्वधिक्षिप्य पितुश्चकार पैतृकम् ॥१८॥

अमात्यैर्धनिकैर्मान्यैर्नागरैः सैनिकैः सह।
विद्वद्भिर् ऋषिभिः श्रेष्ठैर्वधूभ्रातृव्रजैस्तथा ॥१९॥

आनेतुं भरतो रामं त्यागो मूर्त इवापरः।
पादेऽपतच्चित्रकूटे सीतासौमित्रिसेविते ॥२०॥

सहसोत्थाप्य रामस्तं अश्लिष्यन् महतोरसा।
सुधावर्षि वचो वर्षन्नपृच्छत् कुशलं कुले ॥२१॥

हृदोन्नीतं पुरो दृष्ट्वा हृष्टाभूत् सोर्मिला सती।
परन्तु प्रार्थितो रामस्सन्तोष्य तं न्यवर्तयत् ॥२२॥

तेनेयं विषदग्धेन बालेनेयं सुमानिनी ।
सुदीर्घेण वियोगेन मृगी विद्धेव मूर्च्छिता ॥२३॥

क्षणान्मोहे गते तस्याः प्रसन्ना मातरोऽभवन्।
नुन्ने तमसि सूर्येण राजन्ते सुजना यथा ॥२४॥

नागरागमनाद् विघ्नं हर्तुं रामो यदा विशत्।
दण्डकं तद् वनं मूर्तो ध्रुवो मृत्युः पदे पदे ॥२५॥

अध्ययोर्ध्यं मनोः शक्त्या ध्यायन्ती सुमनाः सती।
सा पश्यद् रामयोर्वृत्तं प्रत्यक्षमिव यज् यथा ॥२६॥

शूर्पणखा पतिं चेतुं राघवौ पर्युपासिता ।
निराकृतौ भयं दित्सोर्विकृतं श्रुतिनासिकम् ॥२७॥

प्रचोदितास्तया हन्तुं खरादयोऽतिविक्रमाः ।
उपस्थिता पुरस्ताभ्यां हता आसन सहस्रशः ॥२८॥

रावणः श्रुतवृत्तो हि सौवर्णमृगरूपिणा ।
मारीचेन सहायेन दूरे निवेश्य राघवौ ॥२९॥

मैथिलीं हृतवान् रक्षो क्रौञ्ची श्येनोऽबलामिव ।
आश्रमं सीतया हीनं दृष्ट्वा शोकेन तेपतुः ॥३०॥

रामं व्याप्तं शुचा नोऽसौ रुदन्तं प्राकृतं यथा ।
पूर्वां प्रकृतिमानेतुं शक्तोभूदनुवर्तनैः ॥३१॥

अन्विष्यन् स वने सीतां सुग्रीवस्यानपायिनीम् ।
हनुमत् प्रेरणान्मैत्रीं कृत्वा मार्गितवान् शुभाम् ॥३२॥

कप्यानीतैः शिलावृक्षैः पर्वतीयैस्तथापरैः ।
विविधैः साधनैरम्यैरब्धौ सेतुमकारयत् ॥३३॥

रामादिष्टो नलोऽपूर्वः स्थापत्ये प्रवरो महान् ।
प्लाविताः सुजले येन शिला गुर्वीः सुनिश्चलाः ॥३४॥

आश्रित्य रामसेना च प्रावृषे व्यरयोवती ।
जाह्नवी दुष्प्रधर्षेव लङ्कामरुद्ध निर्भयम् ॥३५॥

सेनयोरुभयोस्तत्र महज्जन्यमभूत्तदा ।
भिन्नप्रायं कुलं दृष्ट्वा मेघनादो महाबलः ॥३६॥

सोत्साहयन् स्वसैन्यानि पयोद इव संध्वनन् ।
आगतो रणमायोद्धुं लक्ष्मणेन महामदः ॥३७॥

दर्शयन् बहुमायां सः प्रहरन् बहुरूपधृक् ।
लक्ष्मणाविद्धसर्वाङ्गः शक्तिं चखान वक्षसि ॥३८॥

अपतदवनौ चापो रक्तास्रबिन्दुभिः सह ।
भूपृष्ठं विद्रुमैर्वर्ष्मं सङ्कुचदक्षिमण्डलम् ॥३९॥

ननन्दू राक्षसाः सर्वे तूर्यवाद्यान्यघोषयन् ।
रुरुदुः कपिसैन्यानि वक्षस्ताडमवारुधन् ॥४०॥

लक्ष्मणमङ्कमानीय रामः साश्रुमुखो महान् ।
विलपन् वैद्यपरामर्शात् हनूमन्तं नगेश्वरम् ॥४१॥

आनेतुमोषधिं दिव्यां पूर्वं सूर्योदयात्कपिम् ।
प्राहिणोज्जवसम्पन्नम् सौमित्रिं परिरक्षितुम् ॥४२॥

ऊर्मिला मनुना वृत्तं ज्ञात्वा शोकमहार्णवे ।
क्षिप्ता कुमुदिनीव सा अस्रैः क्लिन्ना जलैर्बभौ ॥४३॥

क्षणान् मूर्च्छासमाक्रान्तम् नेत्रवृत्तिपराङ्मुखम् ।
निःसारं क्षीणसर्वाङ्गं दृष्ट्वोद्विग्ना मृगी सती ॥४४॥

न वैद्यः सुलभो यत्र ओषधिश्चापि दुर्लभा ।
शक्त्या विद्धं रणे दुर्गे सद्यो जीवय मे पतिम् ॥४५॥

विज्ञानमोषधेस्तस्य अज्ञातस्य कथं भवेत् ।
लक्षयोजनविस्तीर्णमध्वानं किमसौ तरेत् ॥ ४६॥

यद्यपि जवसम्पन्नः कपिरस्ति महाबलः।
तरणोरुदयः स्वल्पः कृतोवधिः सकृच्छ्रकृत् ॥४७॥

शोकमहार्णवे मग्ना शोचन्ती भृशमातुरा।
अस्त्रैरक्लेदयद्वासः शाट्यञ्चलं सकञ्चुकम् ॥४८॥

उषः कल्पां निशां दृष्ट्वा स्वपतिं शयितं क्षितौ।
कपेरनागमात् खिन्नैर्रामाद्यैः कपिभिर्वृतम् ॥४९॥

इष्टं विधे यदेतत्ते वियोगाग्निसुतापितात्।
विवासात्प्रथमं त्वया कथं मृत्युर्नमस्कृतः ॥५०॥

आयुषो मेऽखिलं भागं यच्चापि पुण्यसंचयम्।
पत्युरर्थे प्रयुज्याऽऽशु सत्ववन्तं पतिं कुरु ॥५१॥

स्रष्टुमवितुमेतत्त्वम् हन्तुमन्यच्च कारितुम्।
उररी कुरुषे शक्तिं दयालो पाहि मत्पतिम् ॥५२॥

नहि मीमांसते माता स्वसन्ततेर्गुणागुणौ।
दोषान् लेढि गुणान् स्यूते सुखं दित्सत्यहर्निशम् ॥५३॥

मामकीना स्तुतिर्दुर्गे मनोवाग्भ्यः परात्परे।
अलग्ना सुगुणैर्हृद्यैर्न त्वां हर्षयितुं क्षमा ॥५४॥

योग्यायोग्यौ सुतौ माता समं पालयते भुवि।
तस्मात्कारुण्यमाश्रित्य निर्व्यथं कुरुमत्पतिम् ॥५५॥

कुपुत्राः सुशका द्रष्टुं परं विश्वस्य मार्गणे।
शतशो विहिते यत्ने कुमाता न श्रुतिं गता ॥५६॥

विपन्नः कृतदोषोऽपि प्रव्रजन् मातुरन्तिकम् ।
कारुण्यह्रदमाप्लुत्य सुखमाप्नोति निर्भयः ॥५७॥

तस्मात्ते चरणं मातः पतितास्मि यशस्विनी ।
प्रणये स्वं समाश्लिष्य रक्ष त्वमधुना पतिम् ॥५८॥

मारुतिस्तु गिरिं प्राप्य अन्विष्यन् लक्षणैर्गिरिम् ।
औषधं नहि निश्चेतुं शक्तोभून्मोहमागतः ॥५९॥

नोपदेष्टारमन्यं सोऽलभत बहुयत्नवान् ।
खनित्वा तद्गिरिं मूलाद् आनयत्तां रणस्थलीम् ॥६०॥

वैद्यः सत्वरमागत्य मृतसञ्जीवनीं विदन् ।
तस्याः स्वरसमाचित्य लक्ष्मणाय प्रदापयत् ॥६१॥

सुप्तोत्थितमिवालोक्य हृष्टं पुष्टं सुनिर्व्यथम् ।
प्रसन्नमनसः सर्वे हेमन्ते सरितो यथा ॥६२॥

अवग्रहैर्विशोष्यन्त्यः शरदि शालयो घनाः ।
आप्लुता इव वर्षाभिरूर्मिला मुदिताभवत् ॥६३॥

रक्षः सैन्यहृदां मोदो रामादीनसुसमश्लिषत् ।
सङ्क्रान्तमेषु दग्धं यत् राक्षसान् व्यधमत्तदा ॥६४॥

मेघनादो हतस्तेन लक्ष्मणेनाचिराद् रणे ।
रामेण रावणो जग्धो रक्षसां कपिभिश्चमूः ॥६५॥

लङ्कां निष्कण्टकां कृत्वा सान्त्वैः सन्तोष्य मैथिलीम् ।
जीवयित्वा हतं सैन्यम् आसेचयद् विभीषणम् ॥६६॥

वन्यं वृत्तं पुरा सर्वमुपलभ्य मनोर्बलात् ।
विसस्मार समं दुःखं मयूरी स्तनिते यथा ॥६७॥

आरोप्य पुष्पके सर्वान् नन्दिग्राममुपागतः ।
भरतं सम्परिष्वज्य साकेतमगमद्धरिः ॥६८॥

सौमित्रि सीतया सार्धं राममालोक्यनिर्व्रणम् ।
लक्षणं विशेषतो ध्यात्वा निर्निमेषेऽक्षिणी शुभे ॥६९॥

पश्यन्ती स्वपतिं नेत्रैर्दीर्घकालादनन्तरम् ।
सधवाभिरिवान्याभिः समां स्वां सममन्यत ॥७०॥

आह्निकाः सकलाः कालाश्चतुर्दशसमाधिकाः ।
कष्टप्रदाः समभवन् सोढुमपारयन्न सा ॥७१॥

निःशेषं सुगते दिने स्निग्धा सहचरी निशा ।
समागता वधूं द्रष्टुं प्रियलक्ष्मणेन सह ॥७२॥

तं गृहे हृदयेशं सा आगतं वीक्ष्य मानिनी ।
करौ शिरः समानीय सम्मानं सहसाकरोत् ॥७३॥

वागपि स्वागतं कर्तुंन् इयेष सहसा शुभा ।
आवृत्य सुस्मृति तस्याः प्रेमाश्रूणि पुराऽभवन् ॥७४॥

मुखं प्रश्नान्तमाश्रित्य मुकुरमिव मृष्टवान् ।
स्वच्छं कमलवद् दृष्ट्वा वचो मधुरमुक्तवान् ॥७५॥

सुमुखि मत्कृते नूनं कृच्छ्रघातं सुपुष्कलम् ।
वियोगजनितं सोढं तं न शोचितुमर्हसि ॥७६॥

गतं बुधा न चिन्तन्ति भीतेर्यतो न सम्भवः ।
भवन्ति धीबलैरम्यं कृत्वा भाविषु निर्भयाः ॥७७॥

प्राणिनोल्पं महद्दुखं सुखं हृद्यमसम्मतम् ।
भुञ्जते नियतिस्तत्र सेतुः सर्वान्नतिक्रमन् ॥७८॥

पश्य सह नयतः सीतां वनं रामस्य याऽभवत् ।
शुभागतिरबुद्धस्याप्येवं दृष्टा न कुत्रचित् ॥७९॥

चातकीयात्यगाद् रात्रिः कुमुदिन्याः पुरस्थिता ।
हार्दं तमो लयं यातु चन्द्रं प्राप्य शुभानने ॥८०॥

अनुभूतं वने यच्च हृद्यं वापि भयङ्करम् ।
पतिनाऽऽवेदिता सम्यग् अब्जिनी साम्यमञ्चिता ॥८१॥

सौमित्रिसोमसंश्लेषा चन्द्रकान्तोर्मिला बभौ ।
सरसीं सरसां स्नाता लेभेऽलमनलः शमम् ॥८२॥

पुरातनं नवीनं वा व्युत्क्रमं सक्रमं पुनः ।
सरागं जल्पतोस्तयोः सुरात्रिः क्षणदायिता ॥८३॥

रामाय राज्यं दित्सूनां प्रकृतीनां पुरोधसाम् ।
प्रियमुत्सवमाहर्तुं सदः शय्यां समासदत् ॥८४॥

जुष्यश्रिताजिकमलेश्वरशुक्लसूनुर्
नारायणो लिखितवान् दशमाख्य सर्गे ।
वन्यं गमं पितृमृतिं भरतानुरोधम्
संहृत्य राक्षसकुलं स्वगृहागमं शम् ॥८५॥

---

# ऊर्मिलीयमहाकाव्ये

## एकादशः सर्गः

निदेशमाप्तो भरतस्य वीरः
स्वराज्य निक्षेपमलं सुदित्सोः ।
सलक्ष्मणो रामपरोऽनुबिम्बः
पुरो वरीष्ठां जनतामनैषीत् ॥१॥

महर्षयो भातपरात्मतत्वा
विधानदक्षा वशिनो महान्तो ।
वशिष्ठमुख्याः सचिवा विदग्धाः
समासदन् राजसदः सुसज्जम् ॥२॥

करौ समानीय शिरः सभायां
पुरः समेषां भरतो जगाद ।
सकोशराज्यं द्विगुणं प्रयातं
गृहाण बन्धो न्यसितं स्वकीयम् ॥३॥

द्विजैस्ततो वैदिकमन्त्रघोषैः
सुपूज्य रामेण गणाधिपादीन् ।
वधूद्वितीयो रघुनन्दनोऽसौ
न्यवेशि साकेतपुरः प्रभुत्वे ॥४॥

महं प्रकृष्टं जनता निरीक्ष्य
सुधर्मजुष्टादधिकं तमूहे ।
नवैर्नवैर्नित्यचलत्सुनृत्यैः
सुगीतवाद्यैस् त्रिदिवात् परं तत् ॥५॥

यथा बिडाली पयसा सुतप्ता
उदश्वितं फूत्कुरुते सुपातुम् ।
पुरो धृतं दृश्यममुं सहर्षं
विलोकितुं शक्तिमती न दृष्टा ॥६॥

हृदोर्मिला हारि मनोरथं स्वं
चतुर्दशाब्दात् कृतयोगमेनम् ।
स्फुरन्तमक्ष्णोर्विषयं विधाय
स्थिरं न मेने नियुता हि पूर्वम् ॥७॥

वितर्कमेवं वहु कुर्वती सा
पतिं सुदेवान् जलजे स्वनेत्रैः ।
सुरेन्द्रतुल्यान् सरसान् प्रफुल्लान्
पपौ तृषार्तैरिव मोदलीना ॥८॥

फलैः सरत्नैर्विविधैः सुवस्त्रैः
सुभूषणैर्माल्यसुचन्दनैस्तान् ।
समर्च्य रामोऽनुनयन् जगाद
रिपुर्हतो मे भवतां बलेन ॥९॥

सहायकाश्चेन्मिलिता भवन्तः
स रावणो लोकविरावणो नो ।
लभेत कीनाशगृहान् स्वयोग्यान्
कथं स सौमित्रिरहं नियन्ता ॥१०॥

विशिष्टसैन्यं सुलभं ममैतद्
सुभोज्य - शस्त्राद् वसनादुदास्तम् ।
प्रशैत्यमुष्णत्वमपा सुवृष्टिः
सुखं नु यस्मै शयनं स्थलेसु ॥११॥

सुयोगमाप्तेर्भवतां प्रियाणा-
मरिर्महान् शक्रपुरो विजेता ।
त्रिलोकहन्ता मदनप्रधानो
दिवं प्रणीतः सकुलो यथावत् ॥१२॥

कृतोपकारा हृदये मदीये
वसन्तु शश्वत् प्रणयाद् भवन्तो ।
प्रियं विधायाद्य ऋणात् प्रमोक्तुं
क्षमं न मन्ये स्वमहं हि किञ्चित् ॥१३॥

ब्रुवन्तमेवं रघुनन्दनं ते
विलक्ष्य शास्त्रं चरणावगृह्णन् ।
प्रभो सुधन्यं पशुजीवनं नो
दयस्व भक्ति हृदि धेहि नित्याम् ॥१४॥

कपीन् तथर्क्षान् पवनातिशायिनो
जवे बले मेरुसमान् सुमान्यान् ।
स लक्ष्मणो राजमतो हि रामो
व्यसर्जयत्तान् समरे सहायान् ॥१५॥

महर्षयो लोकमतास्तथान्ये
वैदग्ध्यजुष्टाः प्रकृतिप्रधानाः ।
समाहृता हर्षनदाऽवगाहा
जग्मुः शुभाशीर्वचनं किरन्तः ॥१६॥

प्रसेदुषो भ्रातृजनान् स रामो
न्यदेशयद् राष्ट्रसुरक्षणेऽमून् ।
महौजसो नीतिजुषस् सुरक्तान्
मते स्थितान् हृद्यगुणान् सुगोप्तृन् ॥१६॥

अहो गतिर्लोकविधातृचित्रा
यदूर्मिलाकाम्यमिता पुराणम् ।
महावियोगाद्बहुमूल्यरत्नं
दृशोः सुलाभे मुदितो यथान्धः ॥१८॥

पतिं हृदन्तर्विमले निवेश्य
जलैरनन्तैः कमनीयकाम्यैः ।
सुतर्प्यं तृप्तिं मनसो विधातुम्
इयेष कान्ता महनीय भावा ॥१९॥

पुरः स्थितान् वीर भटान् प्रसन्नान्
कपींस्तथान्यान् नयशास्त्रचुञ्चून् ।
समीक्ष्य रामा चकिता तदानीं
पशुत्वमाप्तानपि देवमान्यान् ॥२०॥

धवो मदीयो ह्यपरोऽपि रामो
विचित्रसामार्थ्यसुराशिरक्तौ ।
पशून् सहायान् वनवासिनो यत्
सुगृह्य शत्रुर्विजितो मनस्वी ॥२१॥

मनीषिणो नीतिकला सुविज्ञाः
सुजन्यशास्त्रे बहुशः पटुत्वाः ।
पशुत्वलाभेऽपि विवेकवन्तः
सुरा विहन्तुं वृजिनं प्रयाताः ॥२२॥

ध्रुवं विधाता सुरकर्मकारी
सुरान् व्यनैषीत् पशुतां पशुघ्नीम् ।
न चेन्मनीषा कथमेषु दृश्या
सयत्ननाशे प्रभवे सुमान्या ॥२३॥

प्रतीयते मे मम देवृनाथौ
शरीरकान्त्या वचनैः सुरूपैः।
बलैर्धिया यौ जयिनौ त्रिलोक्या
असंशयं विष्णुमयावतारौ ॥२४॥

अपूर्वपुण्यं मम तावदासीद्
यतो गताहं करमस्य पत्युः।
वियोगतापैः सुकृशां प्रकृत्याऽ
नयत् समक्षं नयनाऽभिरामम् ॥२५॥

कृपानिधिं पापहरं दयालुं
धनप्रदं कामदमात्मनीनम्।
जनान् विपन्नान् हृदये नयन्तं
परेशमीशं शतशः प्रणौमि ॥२६॥

पिता यदीयस्सुतपा विनीतो
महर्षिकल्पो धृत पुण्यराशिः।
अहर्निशं वैदिककर्मलीनः
सुताः सुतप्ता नियतिर्विचित्रा ॥२७॥

अतोर्थये नाथ भवन्तमाद्यं
सुरम्यदृष्टे कुरु भाग्यवृद्धिम्।
गुणान् हृदन्तस्त्वशुभं निरस्य
न कापि दूयेत यथाहमासम् ॥२८॥

चतुर्दशाब्दानि तपश्चरन्त्या
नवं वयो यातमनिन्दितायाः ।
कुलाङ्गनाप्रार्थ्यसुखं न लब्धं
यदस्तिमूलं खलु विश्वभूतेः ॥२६॥

विचिन्तयन्त्यै भवनं सुरम्यं
समृद्धभोग्यं सुमनस्सुमाल्यम् ।
हिमः सुगन्धिः पवनस्तुषारैस्
सुधांशुकान्तिर्न सुखाय तस्यै ॥३०॥

भवं प्रशून्यं सुगृहं विशुष्कं
तनुं सुतुच्छां सुफलैरसेव्याम् ।
महार्टवि सा मनुते धरित्रीं
सुताः सपुत्रा न भवन्ति यस्यै ॥३१॥

निषेदुसीं तल्पमदभ्ररत्नं
सुखं सुशीलां स्थिरमासितां ताम् ।
चलं मनो वेपलसत्सुगात्रां
चकार रम्भामिव वायुरल्पः ॥३२॥

निदाघतप्तं सुखयेज् यथाम्भः
पयोमुचां लक्ष्मणमात्मदेवम् ।
समक्षमालक्ष्य हसन्तमीषत्
प्रणम्य सम्मान्य जहर्ष साध्वी ॥३३॥

विभावरी चन्द्रविभादि पूर्वे
विदाहिशान्तिप्रदमुत्तरस्मिन् ।
क्षणे हि पत्यावयुते युते यन्
मुदां स्थितिं संस्कुरुतेऽनवद्याम् ॥३४॥

पयोः सुयूनोः सुरतिर्विचित्रा-
मभूतपूर्वां स्थितिमादधाना ।
दिनं दिनं चान्द्रमसीं सुवृद्ध्या
जिगाय कान्तां सुदि वर्धमानाम् ॥३५॥

समा व्यतीयुर्ललिता ह्यनेकाः
सुरक्तयोः शंकरदुर्गयोर्व ।
तडित्प्रभा साम्ययुजो विशिष्टा
विरक्तिभाजौ न बभूवतुस्तौ ॥३६॥

अर्हादिवं स्निग्धतमैर्विधेयै-
र्मिथोभवैस्संस्तुतलब्धवृत्तौ ।
नवौ नवौ तौ प्रियता चकार
पुराणता तत्र पदं न लेभे ॥३७॥

मिथोनुरक्तैस्सुगुणैस्सुवीर्यै
र्मदाञ्चिता नागहया निबद्धाः ।
स एव रागो मदनं निबद्धुम्
इमौ सशक्तावशकन्न कर्तुम् ॥३८॥

अथापि सन्तानसुखानवाप्तौ
न रेजतुस्तौ कमलं निशीथे।
कुमुद्वती मध्यदिने यथा वा
पपृच्छतुर्दैवविदं वशिष्ठम् ॥३९॥

चिरं युवां नो सुसुतौ लभेतां
कुलप्रतिष्ठामुदयं स्वपित्रोः।
करिष्यतो वंशविवर्द्धनं यौ
समाद्रियेतां प्रकृतीः प्रजावत् ॥४०॥

विजित्य राज्ञो महतस् समृद्धान्
समुन्नतान् कोशबलैर्धरित्र्याम्।
प्रगृह्य तेभ्यो वसु राजसूये
प्रदास्यतेऽसौ रघुनन्दनाय ॥४१॥

भवेत्स आद्यो ह्यपरो महीयान्
धिया गुरुश् शक्रसमो बलेन।
नयप्रयोगे हृतशुक्रबुद्धी
रणाग्रणीर्यस्सुभटो विनम्रः ॥४२॥

वसन्तमासाद्य वनं सुपर्णै-
र्विचित्रपुष्पैः सुषमां तनोति।
तथोपदेशाऽमृतपानपुष्टं
मनः प्रकामैरतनोत् सुकान्तिम् ॥४३॥

गुरूढजाद् राजगृहं विगाह्य
दिनान्यगच्छन्न बहूनि यावत् ।
प्रियं परेषां स्वकुलस्य काम्यम्
अधत्त गर्भं चिरकाङ्क्षितं सा ॥४४॥

पतिं द्विमासावतियाय पत्नी
न्यवेदयद् द्रष्टुमनाः कृशाङ्गी ।
गिरिं वनं सा नगरं सुतीर्थं
फलैः सुभक्ष्यैः परिपूर्णकामा ॥४५॥

निवेद्य रामं विनतो महीयान्
युवागुणैर्नीतिमयैः सुतन्त्रैः ।
वशीकृतो भूवलयं विरोप्य
रथे तु पत्निं स्वयमासदत् सः ॥४६॥

सुमेरुतुल्यैर्धनिनां निवासै-
स्तडित्प्रकाशैः खचितैस्सुचित्रैः ।
विविज्ञविप्रैः श्रुतिवेद्यधर्मैः
प्रभासिरत्नैर्नयनाभिरामैः ॥४७॥

श्रुतिप्रघोषैर्विदुषां सुयज्ञे
पठद्भिरिज्याविधिमग्र्यछात्रैः ।
प्रवृत्तिभिर्वेदधरैः प्रवीणै-
र्मृदङ्गवीणापटहैः सुगीतैः ॥४८॥

पुरं विभास्वन्निपुणं विगाह्य
गतौ बहिर्ग्राम्यभुवं सुक्षेत्रम्।
विरूढसस्यं सुघनं सुनीलं
भृतं प्रशष्पैर्जनतापशोषम् ॥४९॥

कृषौ रताः कर्षकराः सभृत्या
लुनन्ति शष्पानि मृढं कृषन्ति।
चयन्ति घासान् मृदुगायनास्ते
गदन्ति हास्यानि मिथस्सुखानि ॥५०॥

भाग्रायं या कृषकतरुणी सव्यहस्ते क्षुरप्रं
वामे धात्रीचिततृणचयं सस्यभिन्नं लुनाति।
शङ्कं शङ्कं नदति विरलं गानभूते मृदुत्वम्
दृष्ट्वा स्विन्नामविहतगतिं ग्रावदार्ढ्यं प्रणश्येत् ॥५१॥

मेघाच्छन्ने नभसि पवनो रूढतोयः प्रवाति
चुम्बत्याशां रविरपि भयात् क्षीणकान्ति प्रतीचीम्।
गावो वत्सा विकृतवदना वेपमानाः स्ववासं
क्लिन्नाः पान्था झटिति शरणं याचमानाः प्रयान्ति॥५२॥

भगीरथानीतनदीं पवित्रां
भुवं पुनानां वृजिनं तपन्तीम्।
तपो विना स्वर्ग्यसुखं ददानां
नतिं प्रयोक्तुनपि नाथयन्तीम् ॥५३॥

हिताय लोकस्य कुलस्य वृद्ध्यै
भवाय भव्यस्य सुतस्य लब्ध्यै।
अस्मिन् परत्रात्मसुखाय शान्त्यै
प्रणम्य चार्चेहि सुखप्रसूत्यै ॥५५॥

सुकूलमासाद्य परं प्रयागः
स तीर्थराजोऽभयदो नरेभ्यो।
विभेति यस्मात् पितृराडखिन्नस्
तरन्ति मर्त्याः सहसाऽवगाहात् ॥५५॥

समाः प्रयाता बहुला यदाऽत्र
प्रयाजिभावादभवत्प्रयागो ।
ह्यवाचि पूर्वे भगिनी यमस्य
सरस्वती जह्नुसुता वहन्ति ॥५६॥

अत्रा प्रयागे प्रतिवर्षमस्मिस्
तटं द्युनद्या ह्वयतेऽन्तरिक्षम्।
अनेकदेशान्मनुजैः समेतैः
परीतमिन्दुर्भगणैर्यथा खे ॥५७॥

पुरीषु काशी रमते तटेऽस्या
अपूर्वसामर्थ्ययुता मृतेभ्यः।
सुपापहिंसाभृतिमज्जनेभ्यो
ददाति मुक्तिं हि शिवप्रसादात् ॥५८॥

प्रदृश्यमेतन्नगरस्य नद्या
भुवि प्रदेशस्य विरूढसस्यम् ।
यदाश्रयं प्राणभृतां समेषां
विलोकितं द्रक्ष्यसि शिष्टमर्थम् ॥५९॥

गिरेः पन्था वनस्यापि विषमो बहु दुर्गमो ।
न च स्यन्दनगतिस्तत्र कथं नेयामिमां शुभाम् ॥६०॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः ।
नारायणो गदितवानभिषेकपत्नी-
सम्वादगर्भनगरीसुषमावलोकान् ॥६१॥



## ऊर्मिलीय महाकाव्ये

### द्वादशः सर्गः

स पुष्पकं कामगमात्मसुख्यं
विभासि तेजः पटलैर्दिनेशम् ।
विभासयत्तत्सुतमो निरस्यत्
स्मरन्निवेदं पुरतो लुलोके ।। १ ।।

न शैत्यतापौ न भयं पिपासा
क्षुधाविलासो मनसः सुखेदः ।
पथि प्रभूतस्खलति प्रभावो
भवन्ति यत्र स्थित मानवेभ्यः ।। २ ।।

सुरेन्द्रयानं महसा विभासि
निदेशि यन्त्रा न नियम्यते यत् ।
समासितानां रुचिमादधानम्
स्वयं प्रयाति प्रजवं सुमन्दम् ।। ३ ।।

निवेश्य तस्मिन् रमणीं विमाने
स्वयं तदाश्लेषि वनं प्रयातुम् ।
विमानराजो धरणीं विहाय
खगो यथा खे गतिमाततान ॥ ४ ॥

तदूर्मिला दण्डकमात्मनेत्रै-
र्वनं स्थिता तत्र निरीक्षते सा ।
क्वचिन् मृगाली शुचि शाद्वलेषु
शनैश् शनैश्चर्वति भक्षितानि ॥ ५ ॥

प्रलम्बचक्षुस् सुपदैस् सुरूपैः
तनूरुहैर्ह्रस्वतमैः सुसूक्ष्मैः ।
अनेकवर्णैर्लघुभिस् सुपुच्छै-
र्मृगान् समीक्ष्ये यमभूत् सुतृप्ता ॥ ६ ॥

क्वचिद् भयाक्रान्त मनोमृगास्ते
धरातलात् खं वियतो धरित्रीम् ।
ततो वियद् गेन्दुकसाम्यजुष्टा
भुवं स्पृशन्तो बहु खे चरन्ति ॥ ७ ॥

मृगा युवानश् शिशवो हरिण्यः
समेत्य सर्वे निवसन्त्यरण्ये ।
चरन्ति घासान् सुजलं पिबन्ति
समाजधर्मोऽविकलो विभाति ॥ ८ ॥

समाजधर्मैरसुमन्त ईज्या
भवन्ति मान्या मुदिता धरित्र्याम् ।
ततो हि सामाजिकता निकेता
समे न वा केवलमेव मर्त्याः ॥ ९ ॥

इमेऽपि सङ्घत्य जयन्ति शत्रून्
प्रिये सुलब्धे हृषिता भवन्ति ।
वियोजिता प्रेमभरैर्निजान्तः
सुखेदमाप्ता हि रुदन्ति सास्राः ॥ १० ॥

निपाननीरे महिषाः प्लवन्ते
यत्रोडुपानि प्रतनूनि नद्याम् ।
उपांशुमन् योगिसमा निमग्ना
निमीलिताक्षाः शमिनः क्वचित्ते ॥ ११ ॥

विषाणवज्रेण नवोन्मदोऽयम्
जिगीषुरन्यं प्रहरत्यहंयुम् ।
स सैरिभो रोषयुतस्तमाप्तः
प्रहृत्य पश्चान्नयते स्वशृङ्गैः ॥ १२ ॥

जयेषिणौ तौ पुरतोऽनु पृष्ठम्
मिथोऽपरं कर्तुमिहेषतुर्वै ।
मृधे कुमाराविव मानि मान्यौ
विरोचमानौ बलिनौ सुशृङ्गौ ॥ १३ ॥

तरून् क्वचित् सैरिभभालघृष्टान्
त्वचा वियुक्तान् सरसान् रसालान्।
रसाऽन्वितं दोषवियुक्तिरम्यम्
सुकाव्यमालोच्य गतेव हर्षम् ॥१४॥

पयोदमालाऽपि घनर्णरूपा
घृताऽन्वया विद्युतमाददर्श।
विशेषघोषात् प्रभयात् सकम्पां
तनुं सुराज्ञ्याः पतिदेवतायाः ॥१५॥

प्रकुर्वती स्नेहमयान् मयूरान्
सुमेचकश्रीश्रितवृत्तभाजो।
विसारि पक्षान्नटवत् विनृत्यत
समीक्ष्य हृष्टा पयसा सिषेच ॥१६॥

अपां पृषद्भिर्घनराजिमुक्तैः
फलैः सुमुक्ता प्रभवैरनर्घ्यैः।
सुनृत्य मुग्धः सुरराण् मयूरान्
अभूषयद् भाति समीक्षसे तान् ॥१७॥

बकावली शान्तिमती सुचञ्चुः
सिता सुलोम्नी चितकेतकीव।
समुन्नते चूतशिखान्तदेशेऽ-
चला तडिद्भा वनभूपकेतुः ॥१८॥

बकः सुधर्मा स्वपदं शनैः शनैः
क्षिपन् तथा याति समाहितोऽयम् ।
जिघृक्षया मत्स्यतनूं समाधे-
रहर्निशं ध्यायति जीवलक्ष्यम् ॥१९॥

गुलाब-गुल्मोऽनृजु शंकुशूनो
मनोज्ञपुष्पैः सितरक्तमिश्रैः ।
सुलोहितैर्गन्धभरैस् सुवृत्तै-
र्वनातिथीन् सत्कुरुते सतृष्णः ॥२०॥

सुगन्धिमेषां पवनो दधानो
दिशश् चतस्रो विपिनं समन्तात् ।
सुगन्धि कुर्वन् नगरीं सुगन्धिम्
प्रतोलिकां ह्लेपयतेऽनवद्याम् ॥२१॥

नक्षत्रकल्पं गणिकासु पुष्पं
दधत् समूहं पिहितप्रशाखम् ।
सुतारकावन्नभसः समासु
सुगन्धतृप्ताऽलिचयं चिनोति ॥२२॥

पदाति पन्थाः सुगमो न चास्मिन्
नतोन्नतोद्घातितमेऽति हिंस्रैः ।
मृगेन्द्र - भल्लूक - तरक्षु - कोकैः
सुखड्ग - शार्दूल - शिवैः सुसेव्ये ॥२३॥

वराहयूथाः सरसीसुकूले
परस्परान् जेतुमिवेह हृष्टा।
पयोदमार्गं नु खनन्ति भूमिं
यथा हिरण्याक्षवधाय विष्णुः ॥२४॥

हिमाद्रिसङ्काश - महोच्च - देशे
त्विषांचयैर्भानुमवैस् सुतप्तः।
सुस्वेदमुक्ताऽञ्चित - वर्ष्मशाली
पयोदवद् गर्जति सिंहसत्त्वः ॥२५॥

प्रचण्डनादात् त्रसिताऽसुमन्तस्
तमिस्रसान्द्रैस्तरुभिस् सुगुप्ते।
निधाय मध्ये तनुजान् युवानः
स्थलेऽवितुं मण्डलिताश्चरन्ति ॥२६॥

सुमन्दमेतद् दिवि सम्प्रयाति
मनोऽनुकूलं मुदमातनोति।
द्रष्टुं समर्थोऽसि पदातिवत्त्वम्
अरण्यसूक्ष्मं सुदृशा विशेषम् ॥२७॥

विधूतपापा ऋषयोऽग्निकल्पा-
स्तपस्विनो धूतमलाः सुदान्ताः।
रजस्तमो ऽस्पृष्टहृदो विशोका
मुमुक्षुभूयाय तपश्चरन्ति ॥२८॥

इमे परत्राऽत्र भवं सुखं नो
वनौकसो लब्धुमिताः वनानि ।
क्षयश्रिया सेव्यतमं यतस्तन्
न लक्ष्यमेषां श्रुतिसम्मतं स्यात् ॥२९॥

असंख्य - जन्मार्जित - पापराशीन्
पुनर्भवं दापयितुं सशक्तान् ।
श्रौतात्मलक्ष्याऽऽकलितान् निपीय
वन्यान् मुमुक्षून्नम योगिमान्यान् ॥३०॥

फलैर्हितैः स्वादुतमैः सुपक्वैः
सुपाच्यमूलैः सुलभैर्लसद्भिः ।
सुधासमैः प्राकृतिकैः पयोभिः
कालं नयन्तोऽनुभवन्ति तत्त्वम् ॥३१॥

तपोऽनुभावैश्चितसिद्धिमन्तो
दिनेशतुल्यांशुचयान् किरन्तो ।
ह्यपार - संसार - समुद्र - मग्नान्
निदेशयन्तो निखिलात्मतत्त्वम् ॥३२॥

कृपालवैः प्राणिभिराशुलभ्यम्
यदस्ति नैषां शतवर्षयत्नैः ।
क्रुधा कथञ्चित् प्रभवेत् कदाचित्
दहेद् भृतं कोटि जनुः सुसाध्यम् ॥३३॥

पलाश - किञ्जल्कचयाभ - रूपैः
फलैरुपेतास्तरवस् सुपक्वैः ।
उदुम्बराः सन्ति तपस्विपोष्या
दृशोहितैः पान्ति मुनीन् विरक्तान् ॥३९॥

पतत्त्रिरावैर्विपिनं मनो मे
द्विजेरितैर्वैदिकसूक्तितुल्यैः ।
जयेति राजन् वदतीव काम्यम्
मुदाञ्चितं साहसिकं प्रसूते ॥४०॥

द्रुमा लताः काशतृणैः कुशाद्या
नवीनपत्रै रवन्ति दिशश्च ।
रवित्विषस् तीक्ष्णतमा लिहन्ति
पथोऽरण्येऽति कृशान् गिलन्ति ॥४१॥

अनेकवर्णैः कुसुमैः सुगुच्छैः
विकीर्णगन्धैः फलवद् द्रुमैश्च ।
ह्रदैः सुनीरैः सुहितां गुहाभिर्
विलोकयेः पञ्चवटीं पवित्राम् ॥४२॥

वनाय मात्रा प्रहितः ससीतः
सबन्धु रामो गृहवन्नु यस्याम् ।
स मोदमानो न्यवसन् महाबलो
महाननेहाः क्षणवज् जगाम ॥४३॥

वहन्ति नद्यः प्रथमं स्म यत्र
अपां महौघैः पुलिनं हि तत्र।
न राजते सान्द्रतरं वनं वा
गिरिस्तु सेयं तनुते धियो मे ॥ ४४ ॥

रुचा शरीरस्य मुखस्य कान्त्या
रतिं हसन्तीव पतिं चिचीषुः।
सुपेलवा शूर्पणखा पिशाची
पुरागमद् भ्रातृवरं हि रामम् ॥ ४५ ॥

वधूं समीक्ष्याऽन्यमना भवन्ती
विहाय तं साऽनुनये प्रवृत्ता।
पुनः पुनर्मे शतशो वचोभि-
र्न्यदर्शयच्चापि मृदु स्वमङ्गम् ॥ ४६ ॥

मयाऽपि सा साममयैः सुपेयै-
र्मनोहरैरार्यमतोपदेशैः ।
हृदो ग्रहं दूरयितुं न तस्या
अशाकि नासा श्रुतिना विहीना ॥ ४७ ॥

तदा हितौत्सुक्यभृताः खरादयो
विहन्तुमागत्य हता मया ते।
तपोऽङ्क्युङ्द्वेषमलीमसो दिङ्
मुखो हरच्चन्द्रमुखीं नु सीताम् ॥ ४८ ॥

हिरण्मयैर्लोमभिराचिताय
मृगाय सीता लुलुभे प्रियं स्वम् ।
ग्रहीतुमार्यं निदिदेश माऽनु
रहो हृता सोममुखी सुकेशी ॥४६॥

तया कुटीं चान्द्ररुचा वियुक्ताम्
निशां विलक्ष्येव गतो सुभोहम् ।
स बन्धु रामो न धृतिं विवेद
न चाऽपि कर्तव्यपथं चिचेत ॥ ५० ॥

समुद्रसेतुं कपिना कृतं तम्
कुमारिकायां स्थितमर्धनग्नम् ।
चमूर्यमाश्रित्य गता सुलङ्काम्
त्रिलोकतप्ता निहतः सपत्नः ॥ ५१ ॥

स्वयं प्रभुर्यो विजये त्रिलोक्याः
पयोधिखातास्तपनीयकोशः ।
सुतस् सुरेन्द्रस्य जयी तथापि
अधर्मसेतुर्विलयं प्रपन्नः ॥ ५२ ॥

अधर्मकृत्यैर्यदि याति वृद्धिम्
सुपुत्रपौत्रैर्विजयैररीणाम् ।
तन्वन् यशस् सम्पदमाचयन्स
पुरः सुखी साधुफली न चान्ते ॥ ५३ ॥

समूलघातं हत रावणेन
प्रसेदिवद्भिः सुजनैर्व्यमर्शि ।
प्रदाहि शक्तिर्दहनं तथोग्रा
यथाऽधिशेते वृजिनं न भानुम् ॥ ५४ ॥

जिजीषु रामेण शिवस्य मूर्तिम्
महर्घपाषाणमयेऽति भव्ये ।
सुमन्दिरे देवि घृताऽन्वयां ताम्
शुभाय नत्यास्तु हि साधुशीले ॥५५ ॥

सुखाय रामेश्वरमाशुतोषम्
अस्मिन् परत्राऽपि जनाः सुधर्म्या ।
विदूरदेशान् स्वपदैर्विलङ्घ्य
समर्चयन्ते विधिना सुमन्त्रैः ॥ ५६ ॥

प्रभूय गङ्गा हिमवत् सरस्या
नदीरसंख्या शरणं नयन्ती ।
हिमैः पयोभिर्धरणिं प्रनन्ती
पयोधिमाश्लिष्य रताऽस्ति बङ्गे ॥ ५७ ॥

महोच्चकाश्मीर - पदेऽति शीतः
समीरणो हैमनतां दधाति ।
दिनेश - कान्ति - मधुरैन्दवीव
हिता न वर्षर्तुभवोऽत्र तापः ॥ ५८ ॥

अस्मिन् प्रदेशे सरसीषु रम्या
निर्मापिता काष्ठगृहाः प्लवन्ते ।
साध्याः स्वयं विश्वसृजाऽतिथीनाम्
भान्तीव हृष्टा हृदयं हरन्ते ॥ ५९ ॥

द्राक्षानिगूढास्तरवो ह्यनेके
फलैःस्तनैर्गोस्तुलितैः सुगुच्छैः ।
अदृश्यपत्रैः सरसैः सुवृष्यैर्
हृद्यं बलिं ते ददतीव नम्राः ॥ ६० ॥

मुष्टिप्रमाणं बदरं नु सेवम्
निम्बूर्मखान्नं करकं फलेन्द्राः ।
नारङ्गकोशाम्रफलाऽमृतानि
प्राघूर्णिकानां हृदमास्वजन्ते ॥ ६१ ॥

हिमालये भाति सुमेरुशृंगम्
यदाधिशेते गिरिशो भवान्या ।
समाधिमग्नो विकिरञ्छुभानि
नमेस्त्वमेनं सुसुताय सुभ्रूः ॥ ६२ ॥

गलित-पथिज-दुःखं स्तुत्यमारुह्य साध्वी
अमरपतिनिदिष्टं पुष्पकं यानराजम् ।
नयन-सुखद दृश्यैः पर्वतीयैः पुरीणाम्
अटवि-नद-नदीनां पूर्णहृष्टा बभूव ॥ ६३ ॥

गर्गे कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजिकमलेश्वरशुक्लसूनुः ।
नारायणो गदति भानुमिते स्म सर्गे
काम्यान् नदीवनभुवो नगरीविशेषान् ॥६४॥



# ऊर्मिलीयमहाकाव्ये

## त्रयोदशः सर्गः

अतुलित - वन - लक्ष्मीं पर्वतीयां श्रियञ्च
समविषम - धरित्रीं सस्यधात्रीं प्रजानाम् ।
व्यवहृतिमिह दृष्ट्वा सोर्मिला राजधानीं
प्रणयद्युतिमती वै पुष्पकेणाऽऽजगाम ॥ १ ॥

गगनतलगतो यज् यानमेतद् यशस्वि
समधिगतनिदेशं शक्र - सेवां निदध्यौ ।
वियुतिमसुखदात्रीं नाकिलोकाद् विहन्तुं
सजवमुपरिगन्तुं यत्नवत् सम्बभूव ॥ २ ॥

नयन - विषय आसीद् द्वाःस्थभृत्यैस् सुदृश्यं
वियति खगकुलं यत् पङ्क्तिलीनं क्षणेन ।
तदनुगृहमियं सा प्राविशत् काञ्चनाभं
झटिति भृतिकरीभिः पोष्यमाणा तदानीम् ॥ ३ ॥

प्रमुदितहृदयाभिस् सद्मलक्ष्मीव हृद्या
सुवृतिमनुभवन्ती काम्यरूपैश् श्रिताभिः।
निजनिजबलिमध्ये वक्षसा श्लिष्यमाणा
रतिमुपहसिताभिर्मोदमापद् वधूभिः ॥ ४ ॥

अनुगतसुसखीभिस् सम्मता साधुशीला
युवति - जन - समीड्या पूतभावा विनम्रा।
स्मृति - विदित - चरित्रैस्तापयन्ती सदोषान्
नमति धृतकरास्माऽऽपादपद्मं जनन्या ॥ ५ ॥

विनय - निकर - नीरे स्नातमायुस् सुपूरं
मनसिज - समरूपं पुत्रमात्माऽनुकूलम्।
प्रणय - निवह - पूरे स्नापयन्ती प्रियं स्वं
स्वपतिसहचरीत्वं दीर्घमायुः सुविन्देः ॥ ६ ॥

कथय सुमुखि दृश्यं वन्यमस्मत् सुपेय—
मनुभवविषयं वै कर्मबोधेन्द्रियैस्ते।
श्रवण - मनन - योग्यं लोकचातुर्यदायि
व्यतनुत सुवचोभिः क्रमपूर्वं यथावत् ॥ ७ ॥

बहुदिनमपि शुष्कं नैशवाऽव्यक्तनादै—
रुदित ललितहासैरिङ्गणैः प्रार्थनाभिः।
अवनिपगृहमस्मिन् म्लानिमग्नं विनासीत्
उदयति शुभगर्भे मोदराशिं सिषेवे ॥ ८ ॥

उदयमविशयानं भ्रूणमाश्रित्य लक्ष्म
स्तनयुगचुचुकाभ्यां नैल्यमाप्तुं व्यचेष्टि ।
कमल - वदन - रागं पीतिमा जेतुमैच्छत्
वलिमित - कटि - कार्श्यं पीनता संश्चकार ॥ ९ ॥

दिवि भुवि सुरलोके भक्ष्यपेये य आस्तां
श्रवण - नयन - गम्ये गीतदृश्ये नटानाम् ।
चलित - वसन - चित्रं रूपवर्चश्चिन्त्यमन्यन्
नरपति - गृहकोणे दोहदार्थं समूढम् ॥ १० ॥

उपचय मितमस्याश्चन्द्रमुख्याश् शरीरम्
पतिहृदि बहुमोदं भावयद् गोत्रमूलम् ।
रघुपति - कुल - सेतुं पुत्र - रत्नं सवितृ
परिजन-जन-कामैरञ्चितं स्यात्ततोऽभूत् ॥ ११ ॥

चिरमभिलषितोऽसौ सूतिमासस् सखीनां
कमलनयनदृश्यस् सम्मदान् वारिराशीन् ।
घन इव दशमो वै तापग्रामान् सुवर्षन्
विलयनमितमोदं प्रापयन्नाजगाम ॥ १२ ॥

शुभ - खचर - विलोक्ये लग्ननाथे तनुस्थे
नवमभवनपे वै केन्द्रसंस्थे विलग्नात् ।
दशमगृहसुनाथे स्वोच्चसंस्थे सुदृश्ये
रतिमुपहसिताऽसौ सूनुरत्नं सुसूता ॥ १३ ॥

शिशुरपि शशिभाभिस्तुल्यकान्तप्रभाभि—
रशुभतिमिरकाण्डं दूरयन् सूतिदीपान् ।
निजमृदुतनुजाभिः कान्तिहीनान् सुकुर्वन्
जनिमलभत चन्द्रोऽरिष्टतल्पेऽद्वितीयः ॥ १४ ॥

रघुपति कुलकेतुं रामचन्द्रं पुरस्तात्
ज्ञपयितुमधितष्ठौ स्मयमाना सुदासी ।
सुतजननमभीष्टं लक्ष्मणस्यात्मपत्न्याः
प्रविदितशुभवृत्तो दत्तवान् वाञ्छितार्थम् ॥ १५ ॥

निखिलभुवनवन्द्यं राज्यमस्य प्रबुद्धैः
सुकृतिसुचरितैस् सन्मार्गसेवासुदक्षैः ।
परहितमसुदानात् साधितुं सम्प्रवृत्तैः
स्मरतुलितममर्त्यैः शून्यमस्मिन्नचाऽऽर्त्तः ॥ १६ ॥

स्वयमशुभनिहन्तुर्लक्ष्मणस्यात्मजेन
रघुकुलमिदमस्मत् पैतृकर्णात् सुमुक्तम् ।
हृदयकलितभावोऽनार्तभावं प्रपन्नो
न च कमपि परं तं प्रापयत्तस्य नाशात् ॥ १७ ॥

श्रुतिविहितविधानं शैशवं जातकर्म
स्वगुरु - समुपदेशात् गृह्यसूत्राऽनुसारम् ।
ऋषिभिरकृतमन्त्रैर्वैदिकैर्लक्ष्मणो हि
तदनु मणिरिवाऽभूत् संस्कृतो बालकोऽसौ ॥ १८ ॥

प्रतिदिनमनवद्यैरेधमानः शशीव
मधुरकिरणसंघैश्चन्दयन् सर्वलोकान् ।
मसृणतनुसमुत्थैश्चन्द्रकेतुः स भूयात्
अभिहितमददुस्ते चन्द्रकेतु च तस्मै ॥ १९ ॥

कलितकिरणचन्द्रात् खं यथा भाति रात्रौ
कुमुदवनमुपैति श्रीसद्म - पुष्प - हासम् ।
रघुपतिरपि तद्वन् मोदपाथः सुपूरे
मृदुतटसुनदेऽसौ मग्न आसीद् विशेषम् ॥ २० ॥

भुवनपतिसदोऽन्नप्राशने संस्कृतौ हि
युवजनवनिताभिः पूर्णमैन्द्राद् विशिष्टम् ।
बहुविधफलपुष्पैर्भूसुरैर्वन्दिभिश्च
श्रुतिमनुनिनदैर्मिष्टान्नमस्मै प्रदत्तम् ॥ २१ ॥

समयमनुसरन्त्यो नागरार्या युवत्यो
मधुर-मधुरगीतैः संघतास् सच्चरित्र्यो ।
ददति चिरमभीष्टं दीर्घमायुः सुतस्य
दधति हृदि विशेषं भावमार्द्रं पुरन्ध्र्यः ॥ २२ ॥

गमयति बहुमासान् चन्द्रवर्षाऽन्वितांस्तान्
अजिरसुततिमध्ये रिङ्गमाणेऽर्भकेऽस्मिन् ।
वृजिनजनिततापात् मुच्यमाने कुलेऽसौ
परिजनकलितौ सौमित्ररामौ व्यभाताम् ॥ २३ ॥

स्वसुतमिव कुलीनं वर्द्धमानं शशीव
जनकसुतनुजाता लोकिता स्वेऽति हृष्टा ।
यदि भवति हि जन्तुः पुत्रवान् मर्त्यलोके
उदयति निज गोत्रे धन्यतां याति मान्यैः ॥ २४ ॥

पुरजनशिशुखेले वाह्यतेऽन्यैर्जितैस्तान्
विजयबलविघाते भाति पृष्ठे वहन् सः ।
वसनपिहितनेत्रो मार्गते वै परन्तु
असफलकृतिकोऽसौ हास्यतां याति मित्रैः ॥ २५ ॥

वितरतु सुखमासां भारतीय प्रजाना-
मपगमयतु तापानेकतां शान्तिमूलम् ।
निगदति शिशुरेको मध्यपंक्तेः परत्र
रुजति तमिह गृह्णं श्छिन्नश्वासप्रदानात् ॥ २६ ॥

इति बहुमतमित्रैर्वल्गुरूपैस् सुरक्तैर्
निहित रुचिकखेलैर्भानुगोत्रीय-बालैः ।
जय - विजय - सुकामैश्चन्द्रकेतुः कबड्डयाः
सहसुविहितसेवो भोक्तुकामोऽजहात्ताम् ॥ २७ ॥

भुवनपतिनिदेशाच्छास्त्रविद्या - प्रभेदान्
निगमतरुसमूला नागमान् बुद्धिगम्यान् ।
सविधिवदधिगन्तुं प्रैद् गुरोराश्रमं हि
प्रतिकृतिरिवसेवां सन्ततं संश्चकार ॥ २८ ॥

नमति चरणमादौ प्रातरुत्थाय मूर्ध्ना—
मनति सविधिदत्तं दैनिकं पाठजातम् ।
द्विविधमलविसर्गाद् गाहते जह्नुपुत्रीं
फलकुसुमवृषीणां योगमस्मै करोति ॥ २९ ॥

निदिशति गुरुरेनं पाठमध्येतुकामं
धरति हृदिमहान्तं मोदसम्भारसेतुम् ।
विनयहृतिहृतं नो वाक्यमस्मै प्रयुङ्क्ते
प्रखरमपि वचो नो कोपसूतिं तनोति ॥ ३० ॥

प्रतिदिनमनु वृत्तेःसेवयाऽऽचार्यविद्या
दिनकृत इव कान्तिश्चन्द्रकेतुं विवेश ।
करधृतशतकोटिर्भाति शक्रो यथा खे
मनुजभुवनवर्ती यो तया दुष्प्रधर्षः ॥ ३१ ॥

अपचितिमतिरम्यां पुष्कलामिष्टरूपां
गुरुमत - परिजुष्टां हेमकुप्यैस् सुमिश्राम् ।
विधिवददति महर्घैर् रत्नसंघैस् सुपूज्य
समधिगतनिदेशः पैत्रसामीप्यमाप ॥ ३२ ॥

मदनसमितरूपं शक्रसारं सुदीर्घं
तनयममुमृषिर्गोदानभाजं व्यधत्त ।
धृति - विनय - कलाभिर्भासमानं पृथिव्या—
मवनिपविधिनाऽमुं सत्कृतं संश्चकार ॥ ३३ ॥

प्रकृतिजनधनानि प्राणवत् पालयन् सः
शमितनिखिलतापो देववत् पूज्यमानः।
कलित - विविध - कोशो मित्रसंघैः सुपीनः
शुचिनय - कृति सेव्यो रामभद्रोऽनुशासन् ॥ ३४ ॥

त्रिदिव - सुखद - यज्ञं राजसूयं सुपूतं
जनहृदि सुरमूर्तिरामभद्रश्चिकीर्षन्।
तुरगमवितुकामश्चन्द्रकेतुं ससर्ज
प्रबलनिचयसूनः पृष्ठतस्तं जगाम ॥ ३५ ॥

दिशि दिशि गमयन्तं मेध्यमश्वं प्रभिन्ने
धरणिविततराज्ये त्रस्तभूपान् निगृह्य।
तदखिलमपि रत्नं दत्तमासीज् यदेभि—
रुपहृतिमुपलभ्य प्राहिणोद् राघवाय ॥ ३६ ॥

उटज सदनमाराद् दक्षिणेनाश्रमं तं
विजितभुवनराज्यः क्षत्रियोऽस्त्येव रामः।
इति लिखितललाटं घोटकं वीक्ष्य दृप्तो
विधृतबटुकवेषो मानमूर्तिर्लवोऽसौ ॥ ३७ ॥

अयि मम सुहृदस् शस्त्राऽस्त्रविद्या सतीर्थ्याः
सुविमृशत वचोऽस्याऽऽर्याऽवमन्तुर्नरस्य।
पथि हरत तुरङ्गं जन्यमेतेन कार्यम्
इति वदति लवे तेऽघ्नन् बाण-संघ-प्रपातैः ॥ ३८ ॥

झगिति धृतजवस्तं मेध्यमश्वं जहार
इषुधिनिहितबाणैर्वज्रतुल्यैस् सपत्नात् ।
प्रहरति बहुतीक्ष्णैर्मर्मच्छिद्भिर् लवोऽसौ
तदनु निहतगात्रान् रक्तसिन्धुः सिषेवे ॥ ३९ ॥

क्षणमपि विरतिं नो सैन्यग्रामो हि लेभे
किरति विविधशस्त्रं साधनाऽऽपूर्णसेवः ।
पथि भजति विनाशं बालकास्त्रप्रघातैश्
शिशुवदन - सुलक्ष्मी दर्शनं नो हि याति ॥ ४० ॥

द्विषदि निहितशस्त्रं प्राञ्जते नो मुखाग्रम्
रिपुविहितनिवेशं हन्ति मर्माणि तेषाम् ।
इति विघटितजन्याश्चन्द्रकेतोस् सुसैन्या
अभवनमितखिन्ना आधिभिश्चुम्बितास्ते ॥ ४१ ॥

विपिन - तरु - समीक्षाऽऽसक्तचेता मनस्वी
तरणिकुलधुरीणश्चन्द्र - केतुर्विलम्बात् ।
लवमृदितचमूनामेत्य सामीप्यमासा-
मभवदतिसखेदोऽवर्धयच्चापि धैर्यम् ॥ ४२ ॥

विरय विरम नाशात्सैन्यसंघस्य मित्र
कथय हृदिगतं मां लक्ष्यमेतस्य धर्म्यम् ।
धनुषि शरनिधानं मोक्षणञ्चाऽपि चित्र-
मिषुधिमपि विशन्तस्त्यज्यमानाश् शरास्ते ॥ ४३ ॥

निगदपरिचयं स्वं यत्र पूर्वैर्निवासः
पुरि कृत इति सर्वं सर्गमासाद्य हृद्यः।
क्व च तव पितरौ किञ्जङ्गले तेऽत्र वासः
सुविशिखविनिवृत्तिर्रामवद् . दृष्टिलग्ना ॥ ४४ ॥

मम मनसि सुतृप्तिर्यादृशी स्फीतिजुष्टा-
ऽनुभवति नहि जन्तुस्तादृशीं भ्रातृभिन्ने।
इति कथयति केतावन्तरात्मा लवस्य
प्रणयनदसुपूरे गाहमानोन्यमज्जत् ॥ ४५ ॥

विविदिषति सुवृत्तं मामकीनं भवांश्चेत्
प्रथमकविमहर्षेराश्रमे वै वसन्त्या।
जनकतनुजलक्ष्म्या राजराजस्य पत्न्या
यमजकुशलवौ श्रीसीतया सम्प्रसूतौ ॥ ४६ ॥

अमृततुलितवाक्यं कर्णरन्ध्रेण पीत्वा
सपदि पुलकपङ्क्तिर्वर्ष्म सेवां व्यधत्त।
कमलनयनमेघो गण्डभित्तिं सिषेच
जलजवलिलताभ्यां वक्षसाऽऽश्लेषिकेतोः ॥ ४७ ॥

दिवसमतिसुधन्यं यत्र दृष्टोऽसि बन्धो
नहि तुलयितुमीशे स्वर्गसौख्येन एनम्।
सविधिविहितपुण्यैर्लभ्यते यत् क्षयिष्णु
प्रकुरु मयि दयां त्वं दर्शयेराश्रमं स्वम् ॥ ४८ ॥

स लवमनुगतोऽयाज् योगकेन्द्रं महर्षेः
कुशकृतशयनीये चिन्तयन्तीं महेशम् ।
यम - नियम - तपोभिर्युज्यमानां प्रशान्तां
जनकसुतनुजातां मैथिलीं वै ददर्श ॥ ४९ ॥

कमलनयनवार्भिः स्नापयन् स्वं कपोलं
सुकमलकरशाखैर्मातृपादौ सुयुञ्जन् ।
परिचयमतिभास्वन्नामगोत्रेण यच्छन्
सपदि पदगतोऽसौ चन्द्रकेतुर्ननाम ॥ ५० ॥

हिमतुहिननिपातैश्छन्नमब्जं वियौति
अलिततिरिवपक्षैरस्त्रबिन्दून् कराग्रैः ।
अपगमयति सीता विह्वला मोदमाना
तदनु वदनयोगं कुर्वती सा चुचुम्ब ॥५१ ॥

विदितसकलवृत्तो हर्षसंघैः प्रसूनो
मसृणलपनलक्ष्मीं धारयन् ज्येष्ठबन्धुः ।
रमितबलयुतो यो रामभद्रादनूनः
स कुश इति पदाह्वोऽश्लिक्षदेनं जवेन ॥ ५२ ॥

कुशलवसहितोऽसौ सीतया सम्मतः सन्
धरणिधृतपदं यच्छिष्टराज्यं विजित्य ।
प्रणतिग्रुतिभिरार्यान् बन्धुमान्यान् प्रहर्ष्यं
हय - यजनसभायां मातृवृत्तं जगाद ॥ ५३ ॥

तदनु जनसमूहैरर्थ्यमानोऽखिलेशः
परिजन - मुनि - संघैर्वंद्यमानः शुचित्वम् ।
प्रमुदितसुरशक्रैः पुष्पवृष्ट्याऽपि मान्यं
रघुकुलमणिरामो मैथिलीमाजुहाव ॥ ५४ ॥

सुरपतिरिव शच्या सीतया तत्र यज्ञे
रघुपतिरार्तिपूतैरश्व - मांसैर्जुहाव ।
श्रुतिगदितसुवर्णैर्दक्षिणाभिस् सुपूर्णे
समभजदिव शान्ति लब्धतत्त्वोऽनपेक्षः ॥ ५५ ॥

वियति शशिनि लक्ष्मीर्भासतेयाऽनवद्या
मृदुकरधृततारा रोहिणीयोगलाभात् ।
चलति शकटिरस्मिन् चक्रयुग्मेन सम्यक्
स इव मनुज एको जीवितुं नो समर्थः ॥ ५६ ॥

इति विहितविचारो मानवग्र्यो धरेशः
परिणयविधियोग्यं चन्द्रकेतुं विचिन्त्य ।
निजकुलसमशीलां रूपवृत्तैस् सुलक्ष्मी-
मभिनवसुकुमारीं ग्राहयामास पत्नीम् ॥ ५७ ॥

प्रमुदितहृदि मान्या जाह्नवी प्रावृषीव
रतिमुपहसितार्मूमिला पुत्रभार्याम् ।
कृतसदननिवेशां चक्षुषा सन्निरूप्य
समभवदतिलक्ष्मीर्मोद - कीलालपद्मैः ॥ ५८ ॥

स्वपतिसुतवधूभिस् सम्मता लक्ष्मणस्य
अहरहरति - हृद्यैर्नृत्यगीतैरपूर्वैः ।
समयमति - सुरम्यं दैनिकं यामिनीयम्
गमयति लव - तुल्यं शर्मसंघैर्वधूः सा ॥ ५९ ॥

अनुरूपां दशामेवं, कांक्षन्ती पत्युरङ्कगा ।
भविष्यत्यपि दान्ते सा, पर्यंकेऽश्लेषि निद्रया ॥ ६० ॥

गर्गे कुले श्रुतिविहित्रमधर्मसेतौ
जुष्यश्रिताजि कमलेश्वरशुक्लसूनुः ।
नारायणो लिखति चन्द्र - सुजन्म - सीता-
वृत्तं त्रयोदशमिते जयमश्वमेधे ॥ ६१ ॥



## ऊर्मिलीयमहाकाव्ये

### चतुर्दशसर्गः

ब्राह्ममुहूर्तमासाद्य, शयनीयं विहाय सा।
कान्तपादौ श्रिया पूर्णौ, ननाम शिरसा सती॥ १॥

चन्द्रकेतोर्जनुर्घस्रं, काम्यं पूतमनुत्तमम्।
तस्य महस्य सम्भारान्, चययेत्त्वरया मुदा॥ २॥

भृत्यैर्निदेशितैर्विप्रा, वह्नितुल्या महर्षयः।
सपत्नीको गुरुश्चान्ये, श्रोत्रिया वेदपारगाः॥ ३॥

रसमन्नं फलं स्वादु, स्रजः पुष्पाणि चन्दनम्।
कह्लारेन्दीवरं भोज्यं, लेह्यं सात्त्विकमाचितम्॥ ४॥

तर्पिता विविधैर्भोज्यैर्भूषणैर्बहुमूल्यकैः।
गवां शतैः पयस्वद्भिः क्षौमवस्त्रैः सकम्बलैः॥ ५॥

चन्द्रकेतुः शतं जीवेत्, पौत्राम्बाजनकैः सुतैः।
समानामयुतः श्रीमान्, दत्ताशिषो गता गृहम्॥ ६॥

साग्रहं राजपत्नीभिः, सतीनामग्रणीर्गुरुः ।
अरुन्धती लोकमाता, अवरुद्धा मनस्विनी ॥ ७ ॥

अभिज्ञा राजधर्माणां, धर्म्यं प्रवचनं शुभम् ।
प्रदातुं यत्नमातिष्ठत्, प्रेमसम्भारसम्भृतम् ॥ ८ ॥

राजभार्यास्तथाऽन्यायाः, कुमार्यो वरवर्णिनी ।
सहिता बहुधा विज्ञा, यूयं शृणुत नो वचः ॥ ९ ॥

सावधानतया भाव्यं, भवतीभिर्हृदा स्वयम् ।
ग्राह्यं ध्येयं सदा योज्यं, व्यवहारे परस्परम् ॥ १० ॥

विधाता कुरुते विश्वम्, ईशमात्रान्निरन्तरम् ।
न च व्यत्ययमायान्ति, पदार्था नियताः समे ॥ ११ ॥

विष्णुः पालयते नित्यमव्यग्रोभूरि साधनैः ।
नचोद्विजति निश्चिन्तो, वृद्धिमिच्छति सर्वदा ॥ १२॥

शिवो विघ्नान् पिनष्ट्येषां, विलयं नयतेऽधमान् ।
रुन्धे गतिमधर्मस्य, सम्पदश्चाभि वर्षति ॥ १३ ॥

विशुद्धसत्त्वप्रधानायां, प्रकृतौ ब्रह्मबिम्बनात् ।
सन्ति लब्धपदाह्येते, धर्मादुक्तकृतौ क्षमाः ॥ १४ ॥

भानुस्तपति खे नित्यमाश्रयं सोऽनपेक्षयन् ।
स्थितिं करोति भूतानाम्, व्यवहारे नियोजयन् ॥ १५ ॥

चन्द्रश्चारुतमां धत्ते, त्रियामां सुचयैस्त्विषाम् ।
न च विराममभ्येति, धर्मस्तत्र हि कारणम् ॥ १६ ॥

अणोर्महत्तमं यावत्, यत् किंचन चराचरम् ।
प्राणिनां सुखदुःखाय, अदृष्टैर्ध्रियते इह ॥ १७ ॥

पत्रं न वेपते चारु, पुष्पं वाऽपि न पुष्यति ।
न वाति पवनो वह्निर्भाति धर्मसखो न चेत् ॥ १८ ॥

पूर्वजन्मकृताद्धर्माद् भवेऽस्मिन् लभते धनम् ।
परे जनुषि सञ्चितैरधर्मैर्याति निःस्वताम् ॥ १९ ॥

पतिपुत्रादिकं काम्यं, मनोऽभिलषितं परम् ।
वृद्धि समाजसम्मान, धत्त धर्मादिहात्मवान् ॥ २० ॥

तस्मात् पुन्यः सदा धार्यो, धर्मः शुद्धान्तरिन्द्रियैः ।
धारणात्प्रकृतेर्नाम्ना, धर्म इत्युच्यते बुधैः ॥ २१ ॥

स चानेकविधो गीतो, मानवानां कृते हितो ।
नारी धर्मः परं मूलं, समेषां पुण्यकर्मणाम् ॥ २२ ॥

मनसाऽपि च न ध्यायेत्, पत्युरन्यं मनस्विनी ।
सा हि पूज्यतमा लोके, देवैः किमुत मानवैः ॥ २३ ॥

तपस्यन्तो यतेन्द्रिया, नित्यमीश्वरचिन्तनात् ।
यत् पदं योगिनो यान्ति, तत् स्त्रियः पतिसेवनात् ॥ २४ ॥

नवान्नतिनवान् भोज्यान्, भुञ्जाना पतिमन्दिरे ।
स्वपती मृदुशय्यायां, भजन्ती पतिदेवताम् ॥ २५ ॥

लालयन्ती सुतान् पुत्रीगृंहकर्माणि कुर्वती ।
अयत्नं याति यं लोकं, सत्यन्ये यन्ति तं श्रमात् ॥ २६ ॥

पत्यौ रागः स्त्रियाः सिद्धो, नहि तत्र श्रमो मनाक् ।
केवलं देववद्भाव्यो, यतः सिद्धिरनल्पका ॥ २७ ॥

गृहकर्मरता नार्यः, पातिव्रत्ये रता यदि ।
लभन्ते सुखमस्मिन् ताः परत्रापि परं पदम् ॥ २८ ॥

मितं प्रददते माता, मितं भ्राता मितं पिता ।
पतिममितदातारं, का न सेवेत भामिनी ॥ २९ ॥

या पतिमवमन्येत, मानमेया मनस्विनी ।
हुं कुर्याद्वापि तुङ्कुर्यात्, परस्मिन् जडतामियात् ॥ ३० ॥

माधुर्यं वचसो रक्षेत्, शीलवृत्ते प्रयत्नतः ।
स्नेहं शौचं दयां क्षान्ति, गृहकार्येषु दक्षताम् ॥ ३१ ॥

स्वप्नमुषसि सन्त्यज्य, ईशं गुरुं पतिं नमेत् ।
आयव्ययौ समीक्ष्यैव, भोग्यवस्तूनि सञ्चयेत् ॥ ३२ ॥

अर्जयन्ति जनाः सर्वेऽनुरूपश्रमसाधनैः ।
व्ययमूनयितुं खिन्नाः, पीडयन्ते परिच्छदम् ॥ ३३ ॥

पिपर्ति जठरं शश्वत्, न च धर्म्यान् बिभर्ति यो ।
रत्नं मानवतां प्राप्यापि, स काचैर्मयते ध्रुवम् ॥ ३४ ॥

क्षणभंगुरदेहेन, परार्थं साधयेद् यदि ।
अपांसुलं जगत् कुर्याज् जन्मना स्वेन सा सती ॥ ३५ ॥

क्षणं क्षणमवेक्षेत, वृत्तं स्वीयं किमन्ततः ।
साम्यमेति पशुत्वेन, मनुजत्वेन वा पुनः ॥ ३६ ॥

जननीं जनकं पत्युः, सेवेताऽहर्निशं मुदा।
यतो वो जनितो भर्ता, पूज्यो मान्यो गुरुर्महान् ॥ ३७ ॥

गुणदोषौ समीक्ष्यौ नो, परस्त्रीपुंसयोः क्वचित्।
मीमांसेत स्वकार्यौ चेत्, यायाद् वृद्धिमनुत्तमाम् ॥ ३८ ॥

महर्घाऽम्बरभूषाणां, सुस्वादु - सफलान्धसाम्।
प्रार्थनैर्ग्रयदृश्याणां, पीडयेन्न पतिं प्रियम् ॥ ३९ ॥

काम्यैधसां युतेर्वह्निः, कामो जातु न शाम्यति।
ततस्तं सन्तोषनीरेण, प्रशमय्य शमं व्रजेत् ॥ ४० ॥

शीलाश्रया गुणाः सर्वे, भासयन्ते वधूर्भुवि।
गते तस्मिन्निवर्तन्ते, यूयं तं भजताऽव्ययम् ॥ ४१ ॥

धर्ममाचरतो दुःखं पापिनश्च सुखान्वितम्।
पश्यन्ती माऽनुमन्येथा, निमित्ते धर्मकल्मषौ ॥ ४२ ॥

साम्प्रतं सुखदुःखे तु, पूर्वे जनुषि सञ्चितैः।
धर्माऽधर्मैर्ध्रुवं याति, न च व्यत्ययमृच्छति ॥ ४३ ॥

पतिं तत् पितरौ नित्यं, सुरवत् समुपाचरेत्।
आयुः स्वास्थ्यकरं भोज्यं धर्म्यं स्वयं सु साधयेत् ॥ ४४ ॥

भर्त्रा विमानिता रोषात्, दुरुक्तैर्वा निपीडिता।
याचितानामनाप्तौ वा, प्रतिशोधं न चिन्तयेत् ॥ ४५ ॥

भगिनीव सपत्नीषु, धवज्येष्ठेषु पितृवत्।
जननीव तद्भार्यासु, पश्यन्ती लभते श्रियम् ॥ ४६ ॥

अनुमाय गुरोः पत्युर्भावं मानससम्भवम् ।
तत्पूर्तौ यत्नमातिष्ठेत्, तां विदुरुत्तमां वधूम् ॥ ४७ ॥

ऐहिकं न फलं किञ्चित्, प्रेक्ष्य वा पारलौकिकम् ।
सेवते या पतिं तस्या, मुक्तिर्दासीयतेऽनघा ॥ ४८ ॥

फलमूलान्नशाकाज्यैः सपयश् शर्करैश् शुभैः ।
पोषयेत् परिवारं स्वं पक्षपातं न संश्रयेत् ॥ ४९ ॥

देवृन् ज्येष्ठकनिष्ठांश्च, वधूस्तेषां सुतान् सुता ।
मृदुता समता रम्यैर्वाक्यैर्वर्तेत तान् प्रति ॥ ५० ॥

पलाण्डु - मत्स्य - मांसाण्ड, सुरालशुनगृञ्जनाः ।
अमेध्यं देशप्रभूतानि, त्यजेदात्महितार्थिनी ॥ ५१ ॥

वशंकरोऽद्वितीयोऽयम्, गुणो भुवि श्रुतोऽसमः ।
विरामः परनिन्दायाः, सर्वैस् सेव्यो जिगीषुभिः ॥ ५२ ॥

श्रौतं स्मार्तं सदाचारम्, सुविभृयादतन्द्रिता ।
लोकैस् सद्भिर्निषिद्धं यत्, मनसाऽपि न चिन्तयेत् ॥ ५३ ॥

पीयूषं सागरः सूते, चन्द्रः सोमलता विदुः ।
प्राच्याः परं यथैते नो, प्रहेतुः सूनृतं वचः ॥ ५४ ॥

मातृत्वे यत्सुखं स्त्रीणां, स्वातन्त्र्ये गृहकर्मणि ।
तत्तुलां मुख्यमन्त्रित्वं, समारोढुं न शक्यते ॥ ५५ ॥

सेनायामन्विता योषा देशमुन्नेतुमक्षमा ।
योग्यमातृत्वसम्पुष्टैः, सुतैः साध्यो यथोदयः ॥ ५६ ॥

भाति मृदुत्वमङ्गेषु, विचित्रमबलातनौ।
कृतिरेवं विधा तेषां, यैरपेक्ष्या सुरक्षिता ॥ ५७ ॥

प्राणिनो भिन्नकर्माणः, प्रकृत्या नियताः समे।
गाव एव प्रसूयन्ते, दुह्यन्ते नो वृषा दृढाः ॥ ५८ ॥

पादैर्यान्ति नरालोके, न हस्तैर्नापि मस्तकैः।
तस्माद् योज्यास्त एवाऽस्मिन्, प्रकृत्या मे क्षमा जनाः ॥५९॥

कर्मणि स्वे रतो जन्तुर्यतमानो दृढाऽनिशम्।
देशं समुन्नयन् लक्ष्मीमात्मीयां लभते स्थिराम् ॥ ६० ॥

वैदुष्यं श्रौतशास्त्रीयं, ग्राह्यं संस्कृतिरक्षकम्।
ज्ञेयमन्यन्न धार्यं तत्, फल्गुस्वार्थसुसाधकम् ॥ ६१ ॥

कुरीतयः कुसंस्काराः नाऽभिभवेयुरिमं यथा।
सन्तानो जन्मतः शिक्ष्यो, न चेदसंस्कृतो भवेत् ॥ ६२ ॥

पञ्चमीं शरदं यावच्छिशौ यत् प्रतिबिम्बते।
तदमार्ज्यमतो रक्ष्यः, सावधानतया हि सः ॥ ६३ ॥

पूर्वं प्रवृत्तिसंसाध्यं, फलं सम्यक् सुचिन्तयेत्।
नचेदनुतपेज् जन्तुर्यावज्जीवं जडो भृशम् ॥ ६४ ॥

बुभुत्सुमनसां तापान्, शान्तिसात्कृत्य वाङ्मयैः।
स्नापयन्ती मुदामोघेऽरुन्धती प्राव्रजद् गृहान् ॥ ६५ ॥

निपीय पूतं वचनं सुमित्रा श्रुतेः पथा शान्तिमती बभूव।
इहत्य कृत्यं चिरमायतौ न सुखाय कल्पेतपरेशबोधात् ॥६६॥

सुघोपदेशेन निवृत्ततर्षा गृहीत-गार्हस्थ्य-निगूढ-तत्त्वा ।
विमर्दिताऽशेषतमो महत्त्वात्तादूर्मिला चान्द्रमसीव कान्ता ॥६७॥

कनिष्ठसूनुं मदनादनून -
ञ्चित्राङ्गदं - हेम हिमांशु - गौरम् ।
वधूद्वितीयं धृत - राज्य - लक्ष्मीम्
द्रक्ष्ये कदा मागध - गेय - कीर्तिम् ॥ ६८ ॥

उपेत चन्द्रांऽशुवधूं कुलीनाम्
महेन्द्रसारोर्ऽजित - भर्तृ - पुष्टाम्
संवेश्य राज्यासनमाश्रयन्तं
सूनुं परं लोकयितुं क्षमिष्ये ॥ ६९ ॥

गर्गं कुले श्रुतिविहित्रिमधर्मसेतौ
जुष्यश्रिताजि कमलेश्वरशुक्लसूनुः ।
नारायणोऽचकथदौर्मिल- काव्य - सर्गे
धर्मं स्त्रिया गुरुवधूकथितं मनो हि ॥ ७० ॥



## पञ्चदशः सर्गः

स राघवो वन्दित - बन्धु - यूथो
ब्रह्मर्षिवर्यैरमरैः प्रशस्यः।
कृपाकरो नीतिचणो यशस्वी
कोपाऽनले दुष्टहविर्जुहाव ॥ १ ॥

अतो जनाः साधुनयाः सुखार्ता
भयाद् विदूरे वृजिनादसत्याद्।
वसन्ति राज्ये विमलाः सुदान्ताः
मनोऽभिरामं सुशमं भजन्ते ॥ २ ॥

प्रजाहितान् प्राणपणेन कृत्वा
सुमेध्यकार्ये प्रकृतीर्नियोज्य।
सुतान् स्वकान् राज्यपदे युयुक्षुर्
जुहाव रामो भरतानुजं सः ॥ ३ ॥

द्वितीय - बाहू रघुनन्दनस्य
सम्पृच्य पादौ जलजाऽनुकारौ ।
सम्भूषयन् पार्श्वमरिन्दमस्य
न्यवेदयद् भ्रातृवरं महेन्द्रम् ॥ ४ ॥

सौमित्रिमात्मानुचरं पुरःस्थम्
प्रह्वं धियो मान्यगुणैरुपेतम् ।
सँल्लक्ष्य सञ्जातमहर्द्धहर्षः
स्वान्ते स्थितं भावमवोचदेनम् ॥ ५ ॥

वन्द्यौ गुणैर्राजभृतां प्रतीक्ष्यौ
सूनूत्वदीयौ प्रणयस्वरूपौ ।
पित्रोः कृते धर्मधुरां प्रजानाम्
प्राणान् सुखं दातुमनर्घ्यकामौ ॥ ६ ॥

कन्दर्पतुल्यौ मुखमण्डलेन
शौर्येण शक्रं क्षमया धरित्रीम् ।
दाक्षिण्यभावैर्जननीं त्रिलोक्या
रुद्रं दयाभिस्तुलितौ गुणैर्यौ ॥ ७ ॥

लयाऽग्नि साहश्ययुजौ नु कोपे
परंतपौ मित्रसमानवीर्यौ ।
वशंवदौ विश्वजननीमर्त्यान्
कृत्यैर्जितावात्मपरार्थं - देहौ ॥ ८ ॥

भूसाम्य - विस्तार - गिरीन्द्र - जुष्टे
स्वन्नैः फलैः स्वादुजलैः सुपुष्टे ।
नवाऽर्जिते कारुपथे सुराज्ये
नियोक्तुमिच्छेयमिमौ प्रभुत्वे ॥ ९ ॥

नाकस्थितानामपि देवतानां
कामानचिन्त्यान् मनसो विचिन्त्यान् ।
सद्यः पुरस्थान् स्वदतां यथावत्
चित्रं महद् भारतवर्षमेतत् ॥ १० ॥

धन्यास्त एते मनुजा वसन्ति
लभ्यं सुरैः स्वादुफलं भजन्ते ।
स्वयंकृतैः कर्मभिरत्र स्वर्गम्
सुसाधयन्तः स्थगयन्ति बन्धम् ॥ ११ ॥

गेयै - विचित्राऽर्थपदैर्जनानाम्
वासं यदस्मिन् रुचिरं स्तुवन्ति ।
आहो किमेभिर्भृतमस्ति पुण्यम्
वर्षे यतो वृत्तिमिमे श्रयन्ते ॥ १२ ॥

ये मानवा भारतवर्षमेनम्
स्वर्गस्य मुक्तेरिह लोकजस्य ।
मोदं ददद् वै निवसन्ति पुण्यम्
देवत्वमञ्चन्ति विना प्रयत्नम् ॥ १३ ॥

विन्ध्योत्तरेऽवाचि गिरीन्द्रदेशात्
साकेतपूर्वे सुविरूढमृद्धम् ।
शिष्टेतरैर्नीतिपथैः सुतृप्तम्
कारोः सुराज्यं तरसा विजेयम् ॥ १४ ॥

निदिष्ट एवं रघुनन्दनेन
सौमित्रिरध्येतुमनीकिनीं ताम् ।
देशाऽनुकूलं समयाऽविरुद्धम्
मीमांसितुं मन्त्रसदो विवेश ॥ १५ ॥

नीतिष्णवैदुष्यजुषो विदग्धान्
तत्तद् विभागाऽधिपसैन्यनेतॄन् ।
आहूय सद्योऽभिमतं प्रयाणम्
प्राचीकटच् छात्रनयं - बुभुत्सुः ॥ १६ ॥

तत्र स्थितानां नय - भासुराणां
सेनापतीनां सुनये मतानाम् ।
क्षिप्रं परस्मिन् समवेतभावं
ज्ञातुं प्रभूणां प्रथमो जगाद ॥ १७ ॥

सेना गजेन्द्रैरचिता चमूस्ते
कल्पान्त - संवृद्ध - पयोधि - शत्रुम् ।
जगद् ग्रसन्तं सहसा विलेढुं
शक्ता न सन्देग्धु भवान् तरस्वी ॥ १८ ॥

वाहाः सुदीर्घा जविनः सुपृष्ठाः
सिन्धौ भवा गन्धवहैस्तुलाप्ताः।
मात्रा मुहूर्तात् पुरुहूत - लोकं
यात्वा पुनर्भूवलयं क्रमन्ते ॥ १९ ॥

पादात - नागाश्वरथाऽधिरूढा
उत्साहशीला - स्तरसाऽद्वितीयाः।
पन्थानमापन्न - गिरिं पयोधिं
सञ्चूर्णितुं पातुमरिं क्षमास्ते ॥ २० ॥

एकैकवीरा महतां महान्त
एकाकिभिः कारुपथो विजेयो।
कार्याऽत्र भीतिर्न च विस्मयो वा
परीक्षितास्ते बहुशो मयाऽस्मिन् ॥ २१ ॥

द्वीपान्तरस्थान् द्विषदां समूहान्
सीम्नः स्वदेशस्य भृतिं दधानः।
अस्त्रैर्महद्भिः प्रहरन्नजस्रम्
कर्तुं क्षमो नाशमयान् क्षणार्धात् ॥ २२ ॥

आकाशमार्गेण स्रुतौ सुदक्षै-
र्यानैः सुपूर्णो मम सैन्यसंघो।
यैराशुयायान् मुदितोऽरिराष्ट्रं
कुर्यान्न विघ्नं रिपुजोऽवरोधः ॥ २३ ॥

प्राबल्यमस्माक - मरिन्दमानां
शत्रोरपेक्षं तनुते तथापि ।
नोपेक्षणीयस्तृणवत् सपत्नो
नेत्रं सुयुञ्जन् कुरुते विनाशम् ॥ २४ ॥

श्रुत्वा वचो युक्ति सुयुक् तथान्ये
धन्येन वादेन समर्थयन्तः ।
सेनां स्वकां साधुजयेन योक्तु-
मादिष्टवन्तो व्यनदत् सुभेरी ॥ २५ ॥

एकीभवद् वारिधि - साम्यभक्ता
सौभात्रभावे रधिवासिता सा ।
रामाऽभिगुप्ता भरताऽनुपार्श्वा
याता चमूः कारुपथं विजेतुम् ॥ २६ ॥

चारेक्षणैः कारुपथस्य राजा
संल्लक्ष्य वृत्तं रघुनन्दनस्य ।
रोद्धुं सपत्नं महता बलेन
यातो बहिः सिंहसमानसारः ॥ २७ ॥

दुर्दम्य सम्प्राप्त - महोग्र - चापाः
सैन्यास्तयोरिद्ध - प्रचण्डकोपाः ।
अन्योऽन्यमाजघ्नुरमोघशस्त्रै-
रस्त्रैर्जये बद्ध - मनोऽभिलाषा ॥ २८ ॥

केचिद् विदीर्णा शिरसानुशक्त्या
भूमि गता पांशु-मृदा सुदिग्धाः।
कुन्तैर्हता लोहितमुद्वमन्ति
बाणैर्दृढं वेपयुता नदन्ति ॥ २६ ॥

केचित् प्रविद्धाः करवालशस्त्रै-
र्हस्तैर्विहीना धृत-रक्त-नद्यो।
भीता द्रवन्तोऽखिलसैन्यसंघं
वार्धि भयं चारुतर नयन्ते ॥ ३० ॥

यामार्ध-संग्राम-मिथो विमर्दात्
जाता नदी शोणित-शोणभद्रा।
मग्नाऽभवद् रामचमूर्विलोक्य
साश्चर्यमासीत् स हि कारुराजे ॥ ३१ ॥

आर्तं स्वसैन्यं शरणेप्सु बुद्ध्वा
रामो दयालुः स्वपरान् सुरक्षन्।
लोके श्रुतं जृम्भकदिव्यमस्त्रं
प्रायुङ्क्त शत्रुः शयितः सयूथः ॥ ३२ ॥

संराद्ध-दुर्गा-विहिताऽनुभावो
यामार्धतुर्याच्छमितास्त्रतापः।
स्वथाः प्रजा-जन्य-रता विधाय
शत्रुर्महेषु व्यसृजज् जयार्थी ॥ ३३ ॥

जातैः सहस्त्रैः फणिभिः पिनद्ध-
सर्वाङ्गसैन्यं व्यथितं ततोऽभूत् ।
साश्चर्यमारीं घटनां विलक्ष्य
पत्रीशपत्रं न्ययुनक् स हन्तुम् ॥ ३४ ॥

जग्ध्वा फणीन्द्रान् सहसा सपाशान्
निर्भीतिरम्यामसृजत् स्वसेनाम् ।
सा ह्यन्वभूत् शान्तिसुखं तदानीं
रामं विदध्यौ परमेशरूपम् ॥ ३५ ॥

हिंसां विना वश्यकरं यदस्त्रं
प्रयुक्तमस्मिन् मनसेप्सितं नो ।
प्राजीजनत् प्रांशुफलं यथावद्
आग्नेयमस्त्रं व्यमुचत् सपत्ने ॥ ३६ ॥

अङ्गारतापैर्विमना भवन्ती
आपद् विमुक्त्यै मुहुरर्थयन्ती ।
त्रायस्व शब्दं सहसोद्गिरन्ती
कारोः पदं सा व्यनमन्नदन्ती ॥ ३७ ॥

कारुण्यपृक्तां विनतौ सुलीनां
स्वां दग्धगात्रां रुदतीं चमूं ताम् ।
संल्लक्ष्य वर्षैर्वरुणास्त्रवृत्तेर्
मोदैर्हसन्तीमकरोत् स धीरः ॥ ३८ ॥

दृष्ट्वाऽद्भुतं जन्यममुष्य राज्ञो
रामस् स सैन्योन्यपतद् विमर्शे।
नास्य प्रशान्तिस् सरलैरुपायैर्
दण्डः सुतीक्ष्णस् सपदि प्रयोज्यः॥ ३९ ॥

कार्ये विधौ निर्णयमेष्टुरस्य
सामीप्यभाजो मुनयोऽसुरं तम्।
हन्तुं भवन्तिस्म विमर्शितुं ते
नाथ त्वया नो समयोऽति वाह्यः॥ ४० ॥

भूतं तथा भावि च वर्तमानम्
हस्ते धृतं सेवमिवाऽवभाति।
विश्वं समन्तादखिलं हि येषाम्
तैः प्रार्थितो ब्राह्ममधत्त रामः॥ ४१ ॥

आसज्ज्यमाने इषुधौ महास्त्रे
जाज्वल्यमाने तडितां रुचेव।
अस्यन् हि लोको बहुधाऽनुतप्तः
आकालिकं खण्डलयं विजज्ञे॥ ४२ ॥

देवेन्द्र - लोकेश - सुरैः समर्त्यैः
पाताल - भूमिष्ठ - दिविष्ठ - जीवैः।
संल्लोक्य शस्त्रं महसा विभासि
तापः सकम्पः सभयैः प्रपेदे॥ ४३ ॥

संत्यक्तमात्रं तरणि स्वभाभि-
रस्त्रं स्वपात् कान्तिचयप्रमोषात्।
वायुं जवैस्तज्जयतिस्म शत्रो-
र्राज्ञः सुकण्ठं व्ययुनक् चकासत् ॥ ४४ ॥

हाहाऽभिधानं करुणं सपत्नाः
संचख्युरस्त्रैः कमलं कपोलम्।
संस्नापयन्तो वलिना नु वक्षस्
ताडं हि ताडं भुवमालिलिङ्गुः ॥ ४५ ॥

हासं नु हासं रघुनन्दनस्य
सैन्यं जगर्जाऽतिशयं ननाद।
ओजस्वितेजो धृतवत् पुरीं तां
सेनां निगृह्याऽध्यकरोन्नु शत्रोः ॥ ४६ ॥

प्राणादनूनं प्रकृतिप्रियं मे
सूक्ष्मं महद् वा क्रियतां भवद्भिः।
नोपेक्षणीयं रसता न हेया
कामं वियुज्येदसुभिर्ध्रुवञ्चेत् ॥ ४७ ॥

पातुं स्वदेशं स्वजनं स्वभूमिं
गेयं सुरैः किन्नर - देवदारैः।
कर्तुं यशो स्वच्छमनिन्द्यमस्मिन्
हित्वा सुखं स्वं श्रितसैन्यभावाः ॥ ४८ ॥

## षोडशः सर्गः

सिद्धप्रायं यदभिलषितं राज्यमास्माकमस्मिन्
ज्येष्ठात् सौमित्रिसुतमपरं स्थापयित्वा शुभं युम् ।
दुःखग्रामैर्मृदितजनतां त्रापयिष्ये सुखेन
राज्यं दित्सोर्मनसि जनितश् शान्तिमाप्तो ममाधिः ॥१॥

अद्रौ तुङ्गे नटवरवपुर्योगिराजो महेशो
नित्यं नृत्यन् रमयति जनानिष्टदानादजस्रम् ।
तस्याऽधस्ताद् विलसति महन् मल्लराज्यं प्रशस्यं
नीरैरन्नैरभिमतफलैश्चन्द्रकेतोः सुयोग्यम् ॥२॥

एतत् साम्ना तदपरनयैर्दानदण्डादिकैर्वा
कुर्वन्नेवं विविधमननं रामभद्रो निजान्तः ।
कार्यं हस्तेऽधिकृतिविलसत् भासमानं धराया-
श्चिन्तामग्नो भरत - सहितं लक्ष्मणं साजुहाव ॥३॥

ओजस्वित्वं मृगपतिसमं शेमुषीं शास्त्रजन्यां
मृद्वीं वाचं प्रणयमधुरां तर्कयुक्ति - प्रधानाम् ।
आश्लिष्यन्तौ विनय-जविना वासितं सम्मुखस्था-
वाहूतौ तौ प्रणतिप्रवणं रामचन्द्रं नतौ स्तः ॥४॥

आसीनौ तौ विमलसदने भाति वैदूर्य्यभाभिः
कान्ति चान्द्रीमपि सुदधतौ रामचन्द्रं पुरस्तात् ।
साम्ना शत्रुर्भवति वशगो जीवहिंसा न हानिर्
देशोन्नत्या सुखि सुजनता याति वर्धिष्णुताञ्चेत् ॥५॥

नीत्या काव्यं गुरुमपि धिया शक्रमेतौ बलेन
क्षान्त्याऽरीणां तपनकिरणैस्तापनेर्भानुमन्तम् ।
मेरुं धृत्या ह्यवनि-जननीं साम्यमानीयमानौ
सिद्धं कर्तुं तदतिभविकं प्रेषिताविन्द्रतुल्यौ ॥६॥

गण्यै - र्मान्यैर्धवलयशसा चुम्बितैः ख्यातशौर्यैः
पश्चादग्रे तुरगशतशो रूढशूरैर्महद्भिः ।
दक्षे सव्येऽगणितपुरुषैरक्षकैः सावधानैः
सज्यैश्चापैरच्छिदकवचैरात्मगुप्तौ प्रबुद्धौ ॥७॥

गच्छन् वायुः सुखयति मृदुर्दक्षिणस् सानुकूलो
गावो वत्सैः स्तनजरसपैर्ब्राह्मणाः कर्मनिष्ठाः ।
आशीर्वादैः सह सुविजयं सूचयन्ते तयोनु
आसाद्येमौ मनसि निहितं मल्लभूपं प्रगीतौ ॥८॥

श्रुत्वा वाचो विषमकटुका मानभक्षा ग्रहृद्या
ध्यात्वा पूर्वं विगतचरितं कारुराज्यस्य ऋद्धिं ।
नष्टं मूलात् सकुलमधुना श्रूयते नोऽभिधेयम्
प्रत्याख्याने गतिरपि तथा मामकीना भवेद्वै ॥९॥

भूपस्तुत्ये दिनकरकुले ख्यातवीर्यैर्भवद्भि-
र्गङ्गास्रोतो विशदयशसा चन्द्रकान्त्या समेन ।
श्वैत्यं नीते जगति सकले ह्रीयमानेऽन्धकारे
धर्म्यैरर्थैः कलितहृदयो वक्तुमीहे विनीतः ॥१०॥

यातोऽहं ते शरणमधुना रक्षणायस्त्वया नु
राज्यं कुप्यं धनमपि परं भाति यन् मामकीनं ।
सर्वं राज्ञो न च मम परन्त्वात्मरक्षा विचिन्त्या
भूमिं स्वल्पां परिजनजनात् पातुमस्मै ददीत ॥११॥

जन्तुः सर्वोऽनुभवति सुखं रामराज्ये यथेच्छं
स्वन्नं भुङ्क्ते मसृणवसनं भाति सूक्ष्मं शरीरे ।
मालां हैमीं लगयति शिरो याति हस्त्यश्वयानैर्
मुद्रां पीतां कलयति करे कङ्कणं रत्नयोगि ॥१२॥

न स्यात्कष्टं किमपि भवते साध्नते रामकार्यं
योग्यां भूमिं कृषकसुखदामन्नदाने समर्थाम् ।
आयं कर्तुं बहुलयशसं सेचनीयां नदीजै-
रद्भि स्तावत् चिनुहि सफलां खेदयेन्नो जनान् स्वान् ॥१३॥

उक्त्वा एवं सपदि सकलं मल्लराज्यं विहाय
राज्ञोऽभीष्टां परिमितधरां रामसात्कृत्य सैन्यैः ।
आर्यं प्रष्टुं भरतसहितो लक्ष्मणोऽसौ जगाम
लब्धादेशो निचितकरणश्चन्द्रकेतु नियोक्तुम् ॥१४॥

नव्ये राज्ये रघुकुलगुरून् कर्मकाण्डे प्रवीणान्
मान्यान् विप्रान् स्मृतिनयविदः श्रौतपान्थान् निनाय ।
श्रौतैर्मन्त्रैर्ऋषिभिरुदितैर्विघ्नराशीन् स रामो
दूरे कुर्वन् प्रमुदितसुतं मल्लराज्ये न्ययुङ्क्त ॥१५॥

हृद्यामोदैः कुमुदकुसुमैः श्वेतरागैस् सुधार्यैः
स्यूतं सर्वैः प्रकृतिसरलैर्बालवृद्धैरखेदम् ।
शश्वद् धार्यं कलितमुदितैर्माल्यमेतन्न राज्यम्
प्रत्युद् भाले मुकुटमसुखं कण्टकैः सेव्यमानम् ॥ १६ ॥

प्रासादान्तर्व्यजनचलितैः शीतवातैः सुसेवे
भानोर्दिव्यैः प्रखरकिरणैर्घर्मतापः कुतो नु ।
रोद्धुं छत्रं विततिमयते यं हि राज्ञः शिरस्थम्
मन्येऽस्थैर्यं दिशति सततं राज्यतन्त्रस्य नित्यम् ॥ १७ ॥

राज्ञो राज्यं शिरसि विधृतं राष्ट्ररक्षार्थमस्मिन्
स्वेष्टं हेयं सुजनरुचिकृद् भाव्यमेनोपहारि ।
तन्नैपुण्यं चयतु हृदये राजनीतेरपूर्वम्
नोचेद् धन्यादनयदहनश् शुष्कगुल्मं सुराज्यम् ॥ १८ ॥

नव्यं राज्यं त्वमति सुनवो बाल एवाऽसि नूनम्
यद्यप्येतद् रुजति हृदयं धार्यतां नाऽत्र शोकः।
सिंहो नागान् प्रमदवयसो हन्ति बालोऽपि धीरान्
उद्यन् सूर्यस् तिमिरनिवहं नाशयन् भाति खेऽद्रौ ॥१९॥

दोषा मृग्याः प्रकृतिमधुरैर्लोभहीनैः सुशीलै-
र्गूढैश्चारैरवधृतिपरैर्राजनीतौ प्रवीणैः।
ज्ञप्ताः सेना पुरिपरिजने योगमाप्ताः प्रजासु
नाश्याः सद्यो जनुषि भवता वृद्धिमाप्ता न हिंस्याः ॥ २० ॥

मन्दं मन्दं सुखदसमये चीयतां धर्मराशिर्
हेमोऽवर्मो झगिति सहसा कर्मबुद्धीन्द्रियैश्च।
एनो वह्निं नहि शमयितुं शक्तिशाली भवेऽस्मिन्
दुःखग्रामं वितरति हृति वर्धमानं कुलस्य ॥ २१ ॥

धैर्यं छत्रं विपदि भवता तन्यतां मुष्टिपीडम्
शान्तिः सम्पच्छिखरमयतां स्वान्तमाश्रित्य नृत्येत्।
मौर्वीं श्लिष्टं करधृतधनू राजतां ते हिताय
शश्वत् साध्यं प्रकृतिसुखदं प्राणदेहैर्बलेन ॥ २२ ॥

यावद् वर्षं सुभग भरतस्तावकीनप्रियार्थम्
साहाय्यं ते प्रकृति-विरतिं वारयन्नत्र कुर्याद्।
अन्तर्बाह्यं बहुनियमयन् राजकार्यं दधीथाः
काम्यां नीतिं भरतविहितां पालयंस्त्वं रमेथाः ॥ २३ ॥

आघ्रातं ते शिरसि विभृयां मालतीपुष्पव्याप्तम्
माल्यं मन्ये न च विरसता स्थानमञ्चेद् हृदन्ता।
वाग्भिर्व्यक्तं जगति निखिलो जन्तुरङ्गीकरोति
नैतस्मान् मामधमचरितं विद्धि ताताऽनुकम्प्यम् ॥ २४ ॥

शरीर - चेष्टागमकैः समूह्यो
विभक्तभावो मनसोऽप्यहृद्यः।
समादृतः स्यादसुभिर्गुरूणां
न चौचितीमाश्रयितुं समीहे ॥ २५ ॥

प्रिया न मे प्राणभृतामुपास्या
वसूनि राज्यं ह्यसवो यशांसि।
यथा गुरूणां हिततत्पराणां
मनोभवोऽनर्घ्यतमो हि कामः ॥ २६ ॥

प्रशिक्ष्य एवं सुनिगूढतत्त्वं
नयप्रभेदं रघुनन्दनोऽसौ।
प्रयाणकाले प्रणतौ कृतायां
जयन्तु मूर्ध्ना नमतेत्युवाच ॥ २७ ॥

मनस्विपूज्यो जनतापहिस्रो
नयस्वरूपो रमणीयकीर्तिः।
परिच्छदैरङ्गद - राजधानीम्
श्रुतोत्तरोऽगान् मुदमावहन् सः ॥२८॥

अवाप्य मन्त्रं भरतस्य चन्द्रः
प्रशासनं चारुतरं विधातुम्।
स चन्द्रकान्तां नगरीं चकार
स्मृतिर्यथेयात् प्रतिराज्यमस्याः ॥ २६ ॥

प्रबन्ध - सौकर्यमपेक्ष्य देशे
अधीत - तर्कानथ - दण्डनीतौ।
प्रशिक्षितान् षोडशमन्त्रिवर्यान्
विभागसंख्यानकरोत् यथावत् ॥३०॥

निर्णीतमेषां सदसा विविच्य
प्रजाहितं देशिककालिकं यत्।
विधेयमत्राऽतनुते स धीरः
समुन्नतिं यान्ति जना यतो वै ॥ ३१ ॥

विदो विनेतुं स्वशिशून् प्रजानाम्
वसन्ति विद्यासदनान्यदूरे।
यतो न खेदो गमनेऽर्भकाणां
स्वयं प्रसन्नाः पठितुं प्रयान्ति ॥ ३२ ॥

बलाहकापेक्षि न चन्द्रराज्यं
कृषीबला धान्य - फलैः समृद्धाः।
नदी - जले - रत्नचयं लभन्ते
विना श्रमं सौख्ययुजो रमन्ते ॥ ३३ ॥

गृहाणि भास्वन्ति सुवर्णरत्नैर्
महर्घभूषावृति - सूक्ष्मवस्त्रैः ।
सुगन्धितैः पुष्पसुगन्धतैलैर्
नराश्च नार्योऽत्र समा सुदेवैः ॥ ३३ ॥

प्रजासु भीतिर्नहि चौरजन्या
न चापि सीमास्थ - सपत्नजन्या ।
स्वयं जना धर्मरता परेभ्यो
विवृद्धिकामा ददते धनानि ॥ ३५ ॥

धर्मार्थकामा मियता समेषां
परस्परान् वर्द्धयितुं यतन्ते ।
मिथोऽनुरक्ता विपदो निहन्ति
विभज्य भोग्यान् हि जनान् नयन्ते ॥ ३६ ॥

द्विषन्ति मर्त्यान् विरता परार्थात्
निहन्ति लुण्ठन्ति निजार्थलग्नाः ।
परोपकाराहित - हार्दभावा
निवृत्तवैराः कथमाचरेयुः ॥ ३७ ॥

बहिः शमोन्तर्विमलश्चकास्ति
विवाद - लेशो पदमादधाति ।
जनेषु नास्मिन् धन - लोभजन्यो
निवृत्तये यस्य भवेदशान्तिः ॥ ३८ ॥

विधानमुल्लङ्घ्य न जातु कश्चित्
प्रयातु कामो मनसाऽपि लभ्यः ।
प्रशासितुं यस्य फलान्वयि स्यात्
बलं महद् वीरवरैरुपेतम् ॥ ३९ ॥

तथापि रक्षा - पुरुषा युवानो
धृतास्त्रशस्त्राः पिहितोत्तमाङ्गाः ।
बलैर्भृताः साहसिकाः सुवेशाः
कृताऽश्वरोहा अवितुं चरन्ति ॥ ४० ॥

विरोध आसीद् यदि शास्त्रपङ्क्ता-
वनेक - पक्षाश्रयणेन तावत् ।
निवर्हणे तस्य रता विदग्धा
न बाधते स्निग्धजनान् मिथोऽस्मिन् ॥ ४१ ॥

विपश्चितो विप्रवरा गुणाढ्याः
श्रुतिस्मृतीनां पठने प्रवृत्ताः ।
तपस्विनो यज्ञविधौ प्रसक्ता
अहर्दिवं वेदऋचोऽभ्यसन्ते ॥ ४२ ॥

परे कलायां कृषिकर्मणि वा
भृतौ स्वतन्त्रा विपणौ विषक्ताः ।
स्त्रियस् सुवेशा गृहकार्यदक्षा
अपांसुला धर्मरता प्रसन्नाः ॥ ४३ ॥

समाज आसां महती प्रतिष्ठा
यदा जनुः प्राणभृतः सुलाल्य।
निमित्तहीनाः प्रणयं किरन्त्यो
नयन्ति पुष्टिं मुदमावहन्त्यः ॥ ४४ ॥

सुभिक्षमात्राऽऽतनुते स्वराज्यम्
रुजो विभूतिर्न च सम्भवाऽपि।
अकालमृत्युर्न पदं दधाति
सती - समर्चा फलतीह शश्वत् ॥ ४५ ॥

सुराशिरत्नैर्मणिभिः सुरत्नैः
कृतो महान् सद्मनि भाति भाभिः।
वसूनि कुप्यानि महार्हकारिण
लसन्ति विष्कम्भकवर्जिते स्वे ॥ ४६ ॥

निवेशमाप्ता सुरुचिः प्रजानां
मनःसु धर्माऽर्थयुता सकामा।
यस्मै यदासीद् विहितं सुकर्म
तन्नाति शेतेस्म कदापि कश्चित् ॥ ४७ ॥

मुमुक्षवोऽपि क्षितकामदोषा
वशी - कृतान्तश्चलहृत्प्रयत्ना।
सञ्चिन्तयन्तोऽप्यपवर्ग - लक्ष्यं
राज्यं समुन्नेतुमितान्वयास्ते ॥ ४८ ॥

नियुक्तचारा विदुषः प्रबुद्धा
जनप्रवृत्तीः पिहितास् स्फुटा वा ।
राज्यान्तरीया निजराज्यरूढा
सङ्गृह्य राज्ञे विनिवेदयन्ते ।। ४९ ।।

मनस्वि चन्द्रो नयनाऽभिरामं
तपस्वि - रूपं निपुणं श्रयन्नु ।
राज्ये भ्रमन् वास्तविकं चिचीषुर्
वृत्तं स्वयं निश्चयतेऽपि तथ्यम् ।। ५० ।।

व्ययं समाधाय कृषेः प्रकल्प्यं
तदाश्रितानां भृतिमाकलय्य ।
लाभांश-षष्ठांश-बलि सुगृह्णन्
तुष्टि विवृद्धिं तनुते कृषीणाम् ।। ५१ ।।

विशस्तथान्ये विपणौ सुलग्ना
बलिं ददन्ते क्रय-विक्रयेषु ।
आयात - निर्यात - नियुक्तमुद्रा—
भागान् समालक्ष्य शतांशमस्मै ।। ५२ ।।

पदे पदे चन्द्रनय - प्रशंसां
प्रजा सुबुद्धेर्विहितां समन्तात् ।
संश्रुत्य हृद्यां भरतो जयश्रीर्
रामादनूनं सममंस्त एनम् ।। ५३ ।।

समन्ततस् सूनुयशो विभूति
हृदुर्मिलाया ललितं सुलभ्य ।
वर्षोद्भवैर्मेघरवैः प्रफुल्लो
बर्हीं यथाऽभूद् रसवान् सुनृत्ये ॥ ५४ ॥

अङ्गदाऽऽरोहणं राज्ये कर्तुं रामो व्यजिज्ञपत् ।
स चन्द्रो भरतस् स्निधो, द्रष्टुं यातोऽखिलेश्वरम् ॥ ५५ ॥

गर्गे कुले श्रुतिविहित्रमधर्मसेतौ
जुष्यश्रिताजि कमलेश्वरशुक्लसूनुः ।
नारायणो गदति मल्लविभूतिनर्ष्टि
चन्द्राधिरोह - सुनयैः सह षोडशे स्म ॥ ५६ ॥



## ऊर्मिलीयमहाकाव्ये

### सप्तदशः सर्गः

विद्रुमैर्निर्मितैः पादैः पट्टिकाभिश्च निर्मलैः ।
विष्टरैर्मसृणैः स्थूलैः कृतं पर्यङ्कमाश्रयन् ॥ १ ॥

सत्यवादी महाप्राज्ञो, न्यायमूर्तिर्दृढव्रतः ।
प्रजाऽनुनयने रक्तो, रामो मानवताऽऽश्रयः ॥ २ ॥

मिथो विचारयन् वृत्तं, सोर्मिलां प्रति श्रद्दधत् ।
त्यागधैर्यसुपुण्यानि, स्मृत्वा चित्रमिवाऽभवत् ॥ ३ ॥

दिव्यं तपोबलं यस्या, आत्मसात् कृतराजकम् ।
तृणीकृतं जगच्चन्द्रं, पुत्रतामनयच्छुभम् ॥ ४ ॥

अङ्गदोऽप्यपरो यस्याः, सुतो भुवि दृढो महान् ।
राजते रूप-लावण्य-दया-दाक्षिण्य-सद्गुणैः ॥ ५ ॥

रोमुर्धर्मजलैस् सिक्तस्, तरुणपुत्रोऽतिवृद्धिमान् ।
जयत्यन्यान् युशस्शुभ्रो मातुरस्मिन्न संशयः ॥ ६ ॥

सुखाय सन्ततेर्दिव्यैः पुण्यैस् सम्पत्समन्विता ।
हिता तदपरापङ्करिहाऽमुत्राफलार्थदा ॥ ७ ॥

अतो धर्मः शनैश्चिन्त्यो मानवैरनिशं बुधैः ।
यो बन्धुः स्वस्य लोकेऽस्मिन् परत्रापि सहायकृत् ॥ ८ ॥

कनिष्ठमङ्गदं सूनुं, सौमित्रेरमितौजसम् ।
कारुपथेऽङ्गदीयायां, पुर्यां कृत्वा प्रतिष्ठितम् ॥ ९ ॥

सन्ततिं सुखसम्पन्नां, वर्तमाने भविष्यति ।
दृष्ट्वा सुखं निर्वत्स्यामि, अयोध्यां प्रति निर्व्यथः ॥ १० ॥

बहुधा स मनस्येवं, चिन्तयन् स्थिरमानसः ।
रामो राज्याऽभिषेकस्य, साधनाय समादिशत् ॥ ११ ॥

मते पुरोधसस् स्थित्वा, किङ्करा बहुवित्तमाः ।
जलमशेषतीर्थेभ्यो, मृदः सप्तकुशानृजून् ॥ १२ ॥

चूतन्यग्रोधयज्ञाङ्ग-प्लक्ष-पिप्पलजं शुभम् ।
पल्लव-पञ्चकं दूर्वाः, केशरैः सहचन्दनम् ॥ १३ ॥

माङ्गल्यकृन्ति वस्तूनि, विहितान्यपराणि च ।
बहुमूल्यान्यमूल्यानि, चिन्तवन्तस् सहस्रशः ॥ १४ ॥

वशिष्ठप्रमुखाः सर्वे, ऋषयो वेदवित्तमाः ।
श्रौतान् मन्त्रान् समुच्चार्य, राज्येऽङ्गदं न्यवीविशन् ॥ १५ ॥

आश्लिष्य प्रभुतां रेजेऽङ्गदोऽसौ दृढविक्रमो ।
दिन-यौवन-संश्लेषात्, रविर्दुःसहतां तथा ॥ १६ ॥

हृदि प्रसाद-सन्तोषौ, संवहञ्च्छत्रुसूदनो।
भविष्यत्युदयं काङ्क्षन्, रामो वारिजलोचनः ॥ १७ ॥

राजधर्मं प्रजाधर्मं, धर्मं व्यक्तिसमाजयोः।
रहः समक्षसन्ध्येयमङ्गदं प्रत्यवर्णयत् ॥ १८ ॥

नवे राज्ये दृढं कर्तुं, सौमित्रेरङ्गदं सुतम्।
लक्ष्मणं राजधान्यां हि, वर्षमेकमतिष्ठिपत् ॥ १९ ॥

श्रीमान् वाचंयमो रामो, न्यायमूर्तिर्मनस्विराट्।
प्रियवादी महाप्राज्ञस् साकेतमगमन् मुदा ॥ २० ॥

पितृसाहाय्यमासाद्य, ऊर्मिलायाः सुतो भृशम्।
शत्रुसहो दिदीपेऽसौ, भानुर्ग्रीष्मे ऋताविव ॥ २१ ॥

प्रतिक्षणं प्रजां रक्षन् विघ्नेभ्यः परिपोषयन्।
विवादनिर्णयात् सद्यो, पेक्षितैः काम्यवस्तुभिः ॥ २२ ॥

जीवनौपयिकीं शिक्षां, संस्कृतेः परिरक्षिकाम्।
शील-वृत्त-सदाचारैर्भासुरां स्मार्त - वैदिकीम् ॥ २३ ॥

ग्राहयन् प्रकृतीः सर्वाः, सद्गुणैः परिपूरयन्।
दुर्गुणान् हापयन् ताभिर्दृढा कुर्वन् चिकित्सितैः ॥ २४ ॥

मिथो निश्छलता रम्यं, व्यवहारं निवेशयन्।
आदधद् विनयं तासु, प्रेमोद्भूतिप्रहेतुकम् ॥ २५ ॥

स्वर्ग्यं भौमं सुखं, हीनं, न श्रेयः प्रेय एव तत्।
न च वास्तविकं लक्ष्यं, नश्वरत्वाद् दिनान्तरे ॥ २६ ॥

ततोऽपवर्गसंसिद्ध्यै, चिन्तनीयः सदा बुधैः ।
जीवेशयोरभिन्नत्वं, तत्त्वमस्यादि वाक्यतः ॥ २७ ॥

वर्णाधर्मभवाशक्तिरेनं ग्राहयितुं क्षमा ।
इति कृत्वा मतिं धर्मे, प्रजाः स्वे स्वे प्रवर्तयन् ॥ २८ ॥

मातुः पितुर्गुरोरेवं, कर्तव्यं परिशीलयन् ।
मातृपितृगुरुत्वैस्तान्, रञ्जयन् स्वमरञ्जयन् ॥ २९ ॥

धर्मवारिभृतो मेघो, जनानां मनसेप्सितम् ।
सुखमात्मसमीचीनं, नयो वर्षत्यहर्निशम् ॥ ३० ॥

रत्नाकरे यथा रत्नं, न काचो लभते पदम् ।
सुखमेव तथा राज्ये, न दुःखमङ्गदस्य वै ॥ ३१ ॥

सुतमङ्गदमासीनं, राज्ये पितृसुरक्षिते ।
वधूं साक्षाच्छ्रियं दृष्ट्वा, शिवया तुलिताऽभवत् ॥३२ ॥

स्म को जानाति मामकी, दशा येयमुपस्थिता ।
हृद्या सर्वजनैः काम्या, स्वप्नेऽपि उपयास्यति ॥ ३३ ॥

पत्युः पार्श्वे समासीना, पश्यन्ती मुखमण्डलम् ।
न ब्रुवत्यपि हार्दं स्वं, काम्यैः स्वेदाः सहाक्षिषुः ॥३४॥

सुखिता पतिपुत्रैः सा ऊर्मिलाऽपांसुलाग्रणीः ।
आयतावपि कल्याणमिच्छन्ती बह्वचिन्तयत् ॥ ३५ ॥

निशायाः पश्चिमे भागे, शयनीयं सुखप्रदम् ।
कुमुदाभं विसृज्यासौ, पितरावनमत् मुदा ॥ ३६ ॥

पतिमनुचरन्ती साः श्वशुराविष्टदेववत् ।
कर्मणा मनसावाग्भिरनिशं समुपासिता ॥ ३७ ॥

सम्मानितौ वधूपुत्रैर्लक्ष्मणश्चोर्मिलां पराम् ।
कोटिं सीम्नो मुदां यातौ, पूर्णचन्द्रात् पयोधिवत् ॥३८॥

अहर्निशं यथाजन्तुर्भोज्यपेयैर्हितावहैः ।
रक्षितुं यतते वर्ष्मं, और्मिलेयस्तथा प्रजाः ॥ ३९ ॥

अन्तस्कृतपदं दोषं, दूषयन्तं विशः स्विकाः ।
प्रेमविश्वाससम्मिश्राश्चारैरक्षिभिरीक्षते ॥ ४० ॥

सम्मार्ष्टि मधुरैर्हृद्यैर्निगूढैर्नयवर्त्मभिः ।
पथो ग्राहयते धर्म्यान्, हार्दं तमो निरस्यते ॥ ४१ ॥

स्व स्व वर्णोचितं कर्म, कुर्वन्तो राष्ट्रया जनाः ।
दधतोऽतुलसम्पत्तीः, सरितो वार्षिका इव ॥ ४२ ॥

प्राणिनां जीवनाधार - सस्योत्पत्त्यै प्रतीक्ष्यते ।
पयः सम्पत् पयोदानां, न नदी मातृकैर्जनैः ॥ ४३ ॥

चरैरुदन्ते ज्ञपिते कदाचित्
उपेत सन्देहनिवृत्तिमिच्छुः ।
निगूढरूपो नगरे भ्रमन् वै
मरालवद् दोषगुणौ व्यनक्ति ॥ ४४ ॥

राज्यं स्वकं धर्म्यजनैर्विदग्धैः
श्रोत्रियवन्द्यैः शमिताघतापम् ।
अन्योऽन्यनिन्दा - प्रतिघातचौर्य-
वृत्तिप्रहीणं सुखदं चकार ॥ ४५ ॥

कृतापराधं स्वजनं स्वमित्रम्
सुतं सपत्नं सहजं स बन्धुम् ।
युनक्ति दण्डैर्वृजिनाऽनुरूपैः
कदापि नो श्लिष्यति पक्षपातान् ॥४६॥

स्वप्ने शये जागरिते समाधौ
भुञ्जन् भ्रमन् यो विघसन् सुभोज्यम् ।
गाथाः प्रकुर्वन् श्रुतिमङ्गयुक्तां
ध्यायन् सुरक्षां तनुते प्रजानाम् ॥४७॥

संवाह्य संवाहक - भाव - भासि
यानं ह्रदापद्वलिभिर्भृतञ्चेत् ।
कुर्यादभीष्टं सततं प्रयाण
राज्यं तथा भिन्नसृतौ विनश्येत् ॥ ४८ ॥

संधाय कल्याणकृति सुदीप्तां
स्वान्ते प्रकामं प्रकृतिप्रकामम् ।
संसाधयन् नित्यमनिन्दितोऽसौ
मान्योऽङ्गदोऽभूदसुभिः प्रजानाम् ॥ ४९ ॥

विशस्तदीयाः सुहिताः फलान्नैः
सुवर्ण भास्वद् विविधैः सुसूक्ष्मैः ।
सुवस्त्रसंघैरधिवासितैस्ताः
स रत्नभूषा - सुचर्यैर्विरेजुः ॥ ५० ॥

प्रशिक्षितुं संवसथे समस्मिन्
सुरम्यहर्म्ये शिशुमन्दिराणि ।
शिशून् त्रयीशास्त्रकलासु यूनो
विभान्ति विद्याभवनानि राज्ये ॥ ५१ ॥

व्यापारमुन्नेतुमना मनस्वी
राज्यान्तरं राज्यपथेन जुष्टम् ।
येनाऽभवत् साऽसिभुशुण्डिभिस्त—
मध्वानमारक्षितमङ्गदोऽसौ ॥ ५२ ॥

यूनां व्रजैरंक्षिभिरात्मनीनैः
शूरैर्महद्भिस् सततञ्चकार ।
निश्शङ्क सार्था वणिजो नयन्ते
क्रय्यान् पदार्थान् बहिरन्तरं वा ॥ ५३ ॥

धत्ते .पदं जागरितेऽनुभूतम्
स्वप्नेऽक्रमं सक्रममात्मनि स्वे ।
तत्राऽपि दुःखं न जनाऽनुरोधि
चित्रं महच्चित्रमभूत्तदानीम् ॥ ५४ ॥

श्रीरामभद्रेण कृतोऽवधिर्यो
वस्तुं शरत् सोऽङ्गदराजधानीम्।
सौमित्रिबन्धोरहितं प्रशास्तुं
गच्छन् समाप्तिं कुरुते स्म खेदम् ॥ ५५ ॥

सुतं निलीनं नृपतेः सुनीतौ
विचिन्तयन्तं मुदमात्मनीनम्।
विशां सदोन्नति - कारि कृत्यं
प्रसाधयन्तं सुमना उवाच ॥ ५६ ॥

सूनो त्वयाऽनेहसि वर्तमाने
भाविन्यपीवाऽऽक्रियतां प्रयासः।
संरक्षणे राष्ट्र - सुयोगमाप्नुतां
म्लानिं न पुष्या वियुतो मया त्वम् ॥५७॥

स्नुषे त्वमीया पदवीं सतीनाम्
भयान्न कामान्न च लोभहेतोः।
मनस्सु यासामपि पापलेशः
पदं न धातुं क्षमते शयेऽपि ॥ ५८ ॥

सुखाय शश्वच्चिनुतात् स्वधर्मं
शरीर-कर्मेन्द्रिय - साध्यमानम्।
जहीह्यधर्मं सुमनो वचोभिः
पतिं परं दैवतमाभजस्व ॥ ५९ ॥

प्रबोध्य एवं बहुधा वधूं सा
प्रमोदपाथोधि - कृताभिषेका ।
सुतं मनोहारि कृतौ जनानाम्
रतं प्रशस्याऽशिषमाचकाङ्क्ष ॥ ६० ॥

प्रयातु कामौ पितरौ रथे स
निवेश्य साकेतमिमौ समर्च्य ।
सुजाति - माल्याऽगुरुचन्दनाद्यैः
प्रणम्य मूर्ध्ना सबलोऽनयत्तौ ॥ ६१ ॥

स्नेह स्तोमान्यनन भुवनैर्व्याप्यमानाऽक्षिकोऽसौ
यन्तुः कृत्यं स्वयमधिवहन् वार्यमाणः स्वपित्रा ।
मात्रा श्लिष्यन् सितरथगृहं भूषितं रत्नसंघैर्
ईशो माभ्यां गणपतितुलामेति लक्ष्मीविलासः ॥६२॥

साकेते तां विततयशसं पापराशिं तपन्तीम्
हृद्यां पेयां दृढमतिकरां स्नान - पान - प्रणामैः ।
नामोच्चारैर्ललित फलदां सेव्यमानां जनौघैः
एधेतां मे नमति सरयूं सोर्मिलासूनु मान्यौ ॥ ६३ ॥

क्षणं क्षणं सेवनतत्परायाः, अपांसुलायाः पतिदेवतायाः ।
समाः क्रियाः दैहिकमानसीयाः भवन्ति पत्युर्मनसोऽनुकम्प्याः॥६४

हृद्यैः फलैः स्वादुजलैः सुशाकैर्नीवारधान्यैर्दिवसावसाने ।
भौमासितैर्वर्ष्मभृति दधानैः साध्यं तपस्तद् गृहिणी स्वधर्मैः॥६५